आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५१

श्रीमन्माधवाचार्यप्रणीतः

# सर्वदर्शनसंग्रहः

मधुसूदनसरस्वतीकृतः प्रस्थानभेदश्च ।

एतत्पुस्तकद्वयम्

आनन्दाश्रमव्यवस्थापकेन

आपटे कुलोत्पन्नेन नारायणात्मजेन हरिणा,

आनन्दाश्रमस्थपण्डितानां साहाय्येन

संशोधितम् ।

तच्च

तेनैव

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२८

खिस्ताब्दाः १९०६



मूल्यं रूपकद्वयम् । (२)

# आदर्शपुस्तकोल्लेखपत्रिका।

अस्य सर्वदर्शनसंग्रहस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं त्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

च. इति संज्ञिते पुस्तके. काशीस्थ वे० शा० सं० रा० सदाशिव गोविन्द कान्हेरे इत्येतेषाम् ।

इति संज्ञितम्—काशीस्थ वे० शा० सं० रा० दामोदरशास्त्री सहस्र-बुद्धे इत्येतेषाम् ।

इति संज्ञितम्—पुण्यपत्तनस्थडेकनकालेजाधिकारिभिर्दत्तम् ।

इति संज्ञितम्—द्राविडलिप्या लिखितं ह्मैसूरपुस्तकसंग्रहालयस्थम् । तत्संग्रहालयस्य व्यवस्थापकैः पण्डितवर्यैः ए. महादेव शास्त्रिभिः प्रहितम् । अस्मिन्पुस्तके शांकरदर्शनमपि विद्यते ।

इति संज्ञितम्—कालिकातामुद्रणालये मुद्रितम् ।

इति संज्ञितम्—काशीस्थपण्डितवर्य गोविन्ददास इत्येतेषां केवलं शांकरदर्शनम् ।

***शांकरदर्शनस्य पुस्तकद्वयमेव लब्धम् । तस्य संशोधने फर्ग्युसनकालेजस्थसंस्कृताध्यापकैः पण्डितवर्यैरभ्यंकरोपाह्ववासुदेवशास्त्रिभिः साहाय्यं दत्त्वोपकारभारेणर्णित्वं नीतोऽस्य पुस्तकस्य प्रकाशकः ।

## अथ मुद्रितदर्शनानामनुक्रमतो नामनिर्देशः ।

ॐ तत्सद्ब्रह्मणे नमः ।

# सर्वदर्शनसंग्रहः ।

## तत्र चार्वाकदर्शनम् ॥ १ ॥

नित्यज्ञानाश्रयं वन्दे निःश्रेयसनिधिं शिवम् ।
येनैव जातं मह्यादि तेनैवेदं सकर्तृकम् ॥ १ ॥

पारं गतं सकलदर्शनसागराणा-
मात्मोचितार्थचरितार्थितसर्वलोकम् ।
श्रीशार्ङ्गपाणितनयं निखिलागमज्ञं
सर्वज्ञविष्णुगुरुमन्वहमाश्रयेऽहम् ॥ २ ॥

श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्येण सर्वदर्शनसंग्रहः ॥ ३

पूर्वेषामतिदुस्तराणि सुतरामालोड्य शास्त्राण्यसौ
श्रीमत्सायणमाधवः प्रभुरुपन्यास्यत्सतां प्रीतये ।
दूरोत्सारितमत्सरेण मनसा शृण्वन्तु तत्सज्जना
माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न संजायते ॥ ४ ॥

अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते बृहस्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण दूरोत्सारितत्वात् । दुरुच्छेदं हि चार्वाकस्य चेष्टितम् । प्रायेण सर्वप्राणिनस्तावत्—

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥

इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नुवानाश्चार्वाकमतमनुवर्तमाना एवानुभूयन्ते । अत एव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् ।

तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवच्चैतन्यमुपजायते तेषु विनष्टेषु सत्सु स्वयं विनश्यति ।

---

१ च. °दि कार्यजातं स° । २ मुद्रितपुस्तके आत्मोचिताचरितमार्थितसर्वलोकमिति । ३ च. °णिचा° । ४ क. च. °ण तस्य दू° । ५ च. °ना नुः का° । ६ क. च. अत्र । ७ च. °नि दे° । ८ च. °तेभ्यस्तेभ्यः । ९ च. विश्वं ।

तदिह विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीति ।

तच्चैतन्यविशिष्टदेह एवाऽऽत्मा देहातिरिक्त आत्मनि प्रमाणाभावात् । प्रत्यक्षैकप्रमाणवादितयाऽनुमानादेरनङ्गीकारेण प्रामाण्याभावात् ।

अङ्गना[3]लिङ्गनादि[4]जन्यं सुखमेव पुरुषार्थः । नचास्य दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम् । अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद्यथा मत्स्यार्थी सशल्कान्सकण्टकान्मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति स यावदादेयं तावदादाय निवर्तते । तस्माद्दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि कश्चिद्भीरुर्दृष्टं सुखं त्यजेत्तर्हि स पशुवन्मूर्खो भवेत् । तदुक्तम्–

त्याज्यं सुखं विषयसंगमजन्म पुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान्हितार्थी ॥ इति ।

ननु पारलौकिकसुखाभावे बहुवित्तव्ययशरीरायाससाध्येऽग्निहोत्रादौ विद्यावृद्धाः कथं प्रवर्तिष्यन्त इति चेत्तदपि न प्रमाणकोटिं प्रवेष्टुमीष्टे । अनृतव्याघातपुनरुक्तदोषैर्दूषिततया वैदिकंमन्यैरेव धूर्तबकैः परस्परं कर्मकाण्डप्रामाण्यवादिभिर्ज्ञानकाण्डस्य ज्ञानकाण्डप्रामाण्यवादिभिः कर्मकाण्डस्य च प्रतिक्षिप्तत्वेन त्रय्या धूर्तप्रलापमात्रत्वेनाग्निहोत्रादेर्जीविकामात्रप्रयोजनत्वात् ।

तथा चाऽऽभाणकः–

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति ।

अत एव कण्टकादिजन्यं दुःखमेव नरकः । लोकसिद्धो राजा परमेश्वरः । देहोच्छेदो मोक्षः । देहात्मवादे च कृशोऽहं कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः । मम शरीरमिति व्यवहारो राहोः शिर इत्यादिवदौपचारिकः ।

---

१ च. तदाहुः । २ च. °नमेवै° । ३ च. °नाद्यालि° । ४ च. °दिजनितं सु° । ५ च. °न्ते । भीरु° । ६ च. °दौ त्रैवि° । ७ च. प्रवर्तन्त । ८ च. °ष्टे । व्या° । ९ च. °तंवादंमा° । १० च. त्र स्थूलोऽहं कृ° । ११ च. °शोऽह° ।

तदेतत्सर्वं समग्राहि । *—

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवाऽऽत्मा न चापरः ।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥ इति ।

स्यादेतत्स्यादेष मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात् । अस्ति च प्रामाण्यं कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुपपद्येत । नद्यास्तीरे फलानि सन्तीतिवचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति । तदेतन्मनोराज्यविजृम्भणम् । व्याप्तिपक्षधर्मताशालि हि लिङ्गं गमकमभ्युपगतमनुमानप्रामाण्यवादिभिः । व्याप्तिश्चोभयविधोपाधिविधुरः संबन्धः । स च सत्तया चक्षुरादिवन्नाङ्गभावं भजते किंतु ज्ञाततया । कः खलु ज्ञानोपायो भवेत् । न तावत्प्रत्यक्षं, तच्च[3] बाह्यमान्तरं वाऽभिमतम् । न प्रथमः । तस्य संप्रयुक्तविषयज्ञानजनकत्वेन भवति प्रसरसंभवेऽपि भूतभविष्यतोस्तदसंभवेन सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् । न च व्याप्तिज्ञानं सामान्यगोचरमिति मन्तव्यं व्यक्त्योरविनाभावाभावप्रसङ्गात् । नापि चरमः । अन्तःकरणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेः । तदुक्तम्—

चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः । इति ।

नाप्यनुमानं व्याप्तिज्ञानोपायः । तत्र तत्राप्येवमित्यनवस्थादौःस्थ्यप्रसङ्गात् । नापि शब्दस्तदुपायः काणादमतानुसारेणानुमान एवान्तर्भावात् । अनन्तर्भावे वा वृद्धव्यवहाररूपलिङ्गावगतिसापेक्षतया प्रागुक्तदूषणलङ्घनाजङ्घालत्वात् । धूमधूमध्वजयोरविनाभावोऽस्तीति वचनमात्रे मन्वादिवद्विश्वासाभावाच्च । अनुपदिष्टाविनाभावस्य पुरुषस्यार्था-

---

* इतः परं श्लोकद्वयमधिकं घ. पुस्तके तद्यथा ‘ अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता । कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते ॥ लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः । देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते ’ ॥ इति ।

---

१ च. °तदे° । २ च. °हि विभागं गमकमङ्गीकृत° । ३ क. च. तत्र । ४ क. °भावप्र° । ५ च. °यपरत° । ६ च. °ण प्रवृत्तेरप्रवृत्तेः । त° । ७ च. °पायम् । त° । ८ च. °थः कगा° । ९ च. °नसंगातिमन्वा° ।

न्तरदर्शनेनार्थान्तरानुमित्यभावे स्वार्थानुमानकथायाः कथाशेषत्वप्रसङ्गाच्च[1]। उपमानादिकं तु दूरापास्तं तेषां संज्ञासंज्ञिसंबन्धादिबोधकत्वेनानौपाधिकसंबन्धबोधकत्वासंभवात्। किंच—उपाध्यभावो[2]ऽपि दुरवगमः[3]। उपाधीनां प्रत्यक्षत्वनियमासंभवेन[4] प्रत्यक्षाणामभावस्य[5] प्रत्यक्षत्वेऽपि अप्रत्यक्षाणामभावस्याप्रत्यक्षतयाऽनुमानाद्यपेक्षायामुक्तदूषणानतिवृत्तेः।

अपि च साधनाव्यापकत्वे सति साध्यसमव्याप्तिरिति तल्लक्षणं कक्षीकर्तव्यम्[6]। तदुक्तम्—

अव्याप्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधि[7]रिति।

शब्दे नित्यत्वे[8] साध्ये सकर्तृकत्वं घटत्वमश्रावणतां[9] च व्यावर्तयितुमुपात्तान्यत्र क्रमतो विशेषणानि त्रीणि। तस्मादिदमनवद्यं समासमेत्यादिनोक्तमाचार्यैश्चेति *। तत्र[10] विध्यध्यवसाय[11]पूर्वकत्वान्निषेधाध्यवसायस्योपाधिज्ञाने जाते तदभावविशिष्टसंबन्धरूपं[12] व्याप्तिज्ञानं व्याप्तिज्ञानाधीनं चोपाधिज्ञानमिति परस्पराश्रयवज्रप्रहारदोषो वज्र[13]लेपायते। तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः। धूमादि[14]ज्ञानानन्तरमग्न्यादिज्ञाने प्रवृत्तिः प्रत्यक्षमूलतया भ्रान्त्या वा युज्यते। क्वचित्फलप्रतिलम्भस्तु मणिमन्त्रौषधा[15]दिवद्यादृच्छिकः। अतस्तत्साध्यमदृष्टादिकमपि नास्ति। नन्वदृष्टा[16]निष्टौ जगद्वैचित्र्यमाकस्मिकं स्यादिति चेत्तन्न[17] तद्भद्रं स्वभावादेव तदुपपत्तेः तदुक्तम्—

> अग्निरुष्णो जलं शीतं[18] समस्पर्शस्तथाऽनिलः।
> केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः॥ इति।

तदेतत्सर्वं बृहस्पतिनाऽप्युक्तम्—

> न स्वर्गो[19] नापवर्गो वा नैवाऽऽत्मा पारलौकिकः।
> नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥

---

* समासमाविनाभावावेकत्र स्तो यदा तदा।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः॥ इति घ. ङ. पुस्तकटिप्पण्याम्।

---

१ च. °च्च। कैव कथा परार्थानुमानस्य। उ°। २ च. उपास्यभा°। ३ च. °रधिग°। ४ क. °वेनाप्र°। ५ क. °वस्याप्रत्यक्षतयाऽनु°। ६ च. °म्। अ°। ७ च. °पाधिः। श°। ८ च. °नित्ये सा°। ९ च. °तां व्या°। १० च. °त्र व्यव°। ११ च. विध्यव°। १२ च. °रूपमज्ञा°। १३ च. वज्रपातेते। त°। १४ च. धूमादि°। १५ च °षधवद्या°। १६ च. °ष्टानङ्गीकारे ज°। १७ च. चेन्न। १८ क. ख. ग. घ. °तं शीतस्प°। १९ च. °र्गो वाऽपि नैवाऽऽत्मा देवो वा पा°।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति ।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः ।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥
यावज्जीवेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
यदि गच्छेत्परं लोकं देहादेष विनिर्गतः ।
कस्माद्भूयो न चाऽऽयाति बन्धुस्नेहसमाकुलः ॥
ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह ।
मृतानां प्रेतकार्याणि न त्वन्यद्विद्यते क्वचित् ॥
त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः ।
जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥
अश्वस्यात्र हि शिश्नं तु पत्नीग्राह्यं प्रकीर्तितम् ।
भण्डैस्तद्वत्परं चैव ग्राह्यजातं प्रकीर्तितम् ॥
मांसानां खादनं तद्वन्निशाचरसमीरितम् ॥ इति ।

तस्माद्बहूनां प्राणिनामनुग्रहार्थं चार्वाकमतमाश्रयणीयमिति रमणीयम् ॥

इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे चार्वाकदर्शनम् ॥

---

## अथ[1] बौद्धदर्शनम् ॥ २ ॥

---

अत्र बौद्धैरभिधीयते यदभ्यधायि अविनाभावो दुर्बोध इति तद्[2] साधीयः । तादात्म्यतदुत्पत्तिभ्यामविनाभावस्य सुज्ञानत्वात् । तदुक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्तरदर्शनात्[3] ॥ इति ।

---

१ च. °रो मुनिभण्डनि° । २ च. अत्र । ३ क. ग. °दर्शनात्तददर्शना° । खं. दर्शनात्रान्तरदर्शनात् । घ. दर्शनान्नदर्शनात् ।

अन्वयव्यतिरेकावविनाभावनि[1]श्चायकाविति[2] पक्षे साध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत्, भूते, भविष्यति, वर्तमाने चानुपलभ्यमाने[3] च व्यभिचारशङ्काया अनिवारणात्। ननु तथाविधस्थले तावकेऽपि मते व्यभिचारशङ्का दुष्परि[4]ह[5]रेति चेन्मैवं[6] वोचः। विनाऽपि कारणं कार्यमुत्पद्यतामित्येवंविधायाः शङ्काया व्याघातावधिकतया निवृत्तत्वात्। तदेव ह्याशङ्क्येत यस्मिन्नाशङ्क्यमाने व्याघातादयो नावतरेयुः। तदुक्तम्-व्याघातावधिराशङ्केति। तस्मात्तदुत्पत्तिनिश्चयेनाविनाभावो निश्चीयते। तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः। कार्यस्योत्पत्तेः प्रागनुपलम्भः, कारणोपलम्भे सत्युपलम्भः, उपलब्धस्य पश्चात्कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते। तथा[7] तादात्म्यनिश्चयेनाप्यविनाभावो निश्चीयते। यदि शिंशपा वृक्षत्वमतिपतेत्स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः। अप्रवृत्ते तु बाधके भूयः सहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयो[8]श्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकारण्यबलादुपपद्यते। न ह्यत्यन्ताभेदे तत्संभवति पर्यायत्वेन युगपदपि प्रयोगायोगात्। नाप्यत्यन्तभेदे गवाश्वयोरनुपलम्भात्[9]। तस्मात्कार्यात्मानौ कार[10]णात्मानावनुमापयत इति सिद्धम्।

यदि कश्चित्प्रामाण्यमनुमानस्य नाङ्गी कुर्यात्तं प्रति ब्रूयात्। अनुमानं प्रमाणं न भवतीत्येतावन्मात्रमुच्यते तत्र न किंचन साधनमुपन्यस्यते[11] वा। न प्रथमः,

एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेत्। इति न्यायात्।

नापि चरमः। अनुमानं प्रमाणं न भवतीति ब्रुवाणेन[12] त्वया[13]ऽशिरस्कवचनस्योपन्यासे मम माता वन्ध्येतिवद्व्याघातापातात्। किंच प्रमाणत[14]दाभासव्यवस्थापनं तत्समानजातीयत्वादिति वदता भवतैव स्वीकृतं

१ ख. °नियामका°। २ घ. च. °ति ननु प°। ३ क. °नेऽपि व्य°। ख. °नेऽर्थे व्य°। ग. °ने व्य°। ४ क. °रिहारे°। ५ ख. °हरैवेति। ६ च. °वं वि°। ७ च. °न्धजस्तादात्म्यनिश्चयोऽनाविनाभावो निश्चीयते ता°। ८ च. °योस्तादा°। ९ च. °त्। यस्मा°। १० घ. च. °रणमात्मानमनु°। ख. °रणावनु°। ११ क. °स्यत उपन्यस्यते वा। १२ ग. °नत्वाच्छिरस्कव°। घ. °न वचनप्रमाणानभ्युपगच्छता त्वया स्वपरकीयशास्त्रे प्रामाण्येनोपगृहीतस्य वचनस्यो°। १३ क. °या पारस्करवचनस्योपन्यस्तम°। ख. °या स्वव°। इति पाठः ख. पुस्तकस्य समाप्ते वर्तते। १४ घ. °तं प्रमाणाभासानु°।

स्वभावानुमानम् । परगता विप्रतिपत्तिस्तु वचनलिङ्गेनेति ब्रुवता कार्यलिङ्गकमनुमानम् । अनुपलब्ध्या कंचिदर्थं प्रतिषेधयताऽनुपलब्धिलिङ्गकमनुमानम् ।

तथाचोक्तं तथागतैः—

प्रमाणान्तरसामान्यस्थितिरन्यधियां[1] गतेः ।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ॥ इति ।

पराक्रान्तं चात्र सूरिभिरिति[3] ग्रन्थभूयस्त्वभयादुपरम्यते ।

ते च बौद्धाश्चतुर्विधया[4] भावनया परमपुरुषार्थं कथयन्ति । ते च माध्यमिकयोगाचार[5]सौत्रान्तिक[6]वैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्वबाह्य[7]शून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते । यद्यपि भगवान्बुद्ध एक एव बोधयिता तथाऽपि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यं यथा गतोऽस्तमर्क इत्युक्ते जारचौरानू[8]चानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं[9] बुध्यन्ते । सर्वं क्षणिकं[10] क्षणिकम् । दुःखं दुःखं, स्वलक्षणं स्वलक्षणं[11], शून्यं[12] शून्यमिति भावनाचतुष्टयमुपदिष्टं द्रष्टव्यम् । तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत्सत्तत्क्षणिकं यथा जलधर[13]पटलं[14] सन्तश्चामी भावा इति । न चायमसिद्धो हेतुरर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य[15] नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् । व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिन्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात्सत्त्वव्यावृत्तेः सिद्धत्वाच्च[16] । तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः[17] समस्ति ।

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥

इति न्यायेन व्याघातस्योद्भटत्वात् । तौ च क्रमाक्रमौ स्थायिनः सकाशाद्व्यावर्तमानावर्थक्रियामपि व्यावर्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम् ।

---

१ ख. ग. च. °स्थितेरन्यधियो ग° । २ च. उच्यते । ३ क ग. °ति गूढभूयस्त्वम° । ख. °ति गूढभूयस्त्वाभावादु° । ४ झ. °विधाः । चतुर्विध° । ५ च. °चारार्हत्सौत्रा° । ६ च. °कसं° । ७ क. ख. ग. °बाह्यार्थशू° । ८ च. °नूवादादारयोर्बोधव्याः स्वाशयानु° । ९ च. स्वयं । १० च. °कं दुः । ११ च. °त्वं य° । १२ क. °दिलक्ष° । १३ च. °धरः स° । १४ घ. °टलः स° । १५ च. °त्तिरितिन्या° । १६ च. °च कि° । १७ घ. °रः संभवति । प° ।

नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यादिति चेत्तदयुक्तं विकल्पासहत्वात्। तथा हि वर्तमानार्थक्रियाकारणकालेऽतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति नो वा। आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपायोगात्। यद्यदा यत्करणसमर्थं तत्तदा तत्करोत्येव यथा सामग्री स्वकार्यं समर्थश्चायं भाव इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदाऽपि न कुर्यात्सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य यद्यदा यन्न करोति तत्तदा तत्रासमर्थं यथा हि शिलाशकलमङ्कुरे, न चैष वर्तमानार्थक्रियाकरणकाले वृत्तवर्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्ययाच्च। ननु क्रमवत्सहकारिलाभात्स्थायिनोऽतीतानागतयोः क्रमेण क्रमणमुपपद्यत इति चेत्तत्रेदं भवान्पृष्टो व्याचष्टां सहकारिणः किं भावस्योपकुर्वन्ति न वा न चेन्नापेक्षणीयास्ते। अकिंचित्कुर्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते न वा भेदपक्ष आगन्तुकस्यैव तस्य कारणत्वं स्यात्, न भावस्याक्षणिकस्य, आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात्कार्यस्य।

तदुक्तम्—

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः॥ इति।

अथ भावस्तैः सहकारिभिः सहैव कार्यं करोतीति स्वभाव इति चेत्। अङ्ग तर्हि सहकारिणो न जह्यात्प्रत्युत पलायमानानपि गले पाशेन बद्ध्वा कृत्यं कार्यं कुर्यात्। स्वभावस्यानपायात्। किंच सहकारिजन्योऽतिशयः किमतिशयान्तरमारभते न वा, उभयथाऽपि प्रागुक्तदुषणपाषाणवर्षणप्रसङ्गः। अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौःस्थ्यमपि स्यात्। अतिशये जनयितव्ये सहकार्यन्तरापेक्षायां तत्परम्परापात इत्येकाऽनवस्थाऽऽस्थेया, तथा हि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम्। अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेद्बीजं चातिशयमादधानं सहकारिसापेक्षमे-

---

१ च. °ल्पानुपपत्तेः। त°। २ क. ख. तदा करो°। ३ च भवति। ४ च. °ये क°। ५ ग. °दा न तत्सम°। ६ क. °तन्न स°। ख. तत्र न स°। ७ क. °भात्क्रमेण क्रमणमु°। ख. घ. °मात्क्रमेण क्रमणमु°। च. °भात्क्रमे°। ८ क. ख. ग. तादात्म्यायो°। ९ च. °क्षे योऽय°। १० च. °रः स किं। ११ क. °रभेत न। १२ च. °णप्र°। १३ ख. °न्तरं भवत्पक्षे। १४ च. °हु-दुःखा°। १५ च. °तिज°। १६ क. °दिन°।

वाऽऽधत्तेऽन्यथा सर्वदोपका[1]रापत्तावङ्कुरस्यापि सदोर्दय[2]: प्रसज्येत । तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिँ[3]न्नप्युकारे पूर्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसंपा[4]द्यबीजगतातिशयानवस्था प्रथमा [5] व्यवस्थिता । अथोपकारः कार्यार्थमपेक्षमाणोऽपि बीजादिनिरपेक्षं[6] कार्यं जनयति तत्सापेक्षं वा । प्रथमे बीजादेरहेतुत्वमापतेत् । द्वितीयेऽपेक्ष्यमाणेन बीजादिनोपकारेऽतिशय आधेयः । एवं तत्र तत्रापीति बीजादि[7]जन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत् । एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापात इति तृतीयानवस्था दुरवस्था स्यात् । अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते । तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तोऽन्यश्चातिशयात्मा कुर्वद्रूपादिपदवेदनीयो जायत इति फलितं ममापि मनोरथद्रुमेण ।

तस्मादक्षणिकस्यार्थक्रिया[9] दुर्घटा नाप्यक्रमेण घटते विकल्पासहत्वात् । तथाहि युगपत्सकलकार्यकरणसमर्थः स्वभावस्तदुत्तरकालमनुवर्तते न वा । प्रथमे तत्का[10]लवत्कालान्तरेऽपि तावत्कार्यकरणमापतेत् । द्वितीये स्थायित्ववृत्त्याशा मूषिकभक्षितबीजादावङ्कुरादिजननप्रार्थनामनुहरेत् । यद्विरुद्धधर्माध्यस्तं तन्नाना यथा शीतोष्णे । विरुद्धधर्माध्यस्तश्चायमिति जलधरे प्रतिबन्धसिद्धिः । न चायमसिद्धो हेतुः स्थायिनि कालभेदेन सामर्थ्यासामर्थ्य[11]योः प्रसङ्गतद्वि*पर्ययसिद्धत्वात्तत्रासामर्थ्यसाधकौ[12] प्रसङ्गतद्विपर्ययौ प्रागुक्तौ सामर्थ्यसाधकावभिधीयेते । यद्यदा यज्जननासमर्थं तत्तदा तन्न करोति यथा शिलाशकलमङ्कुरम्[13] । असमर्थश्चायं वर्तमानार्थक्रियाकरणकाले+तीतानागतयोरर्थक्रियययो[14]रिति[15]प्रसङ्गः । यद्यदा यत्करोति तत्तदा तत्र[16] समर्थं यथा सामग्री स्वकार्यं[17] । करोति चाय

---

* हेत्वभावविपर्ययः सामर्थ्यासामर्थ्ययोरिति शेष इति घ. पु. टिप्पण्याम् । + इत उत्तरमयं ग्रन्थो घ पुस्तके स यथा—असमर्थत्वेऽपि यद्ययं वर्तमानकाले क्रियां करोति तदाऽतीतानागतयोरर्थक्रिये कुर्यादित्यप्रसङ्गः । इति ।

---

१ च. °कारवदङ्कु° । २ च. °दयं प्रसज्जेद° । ३ ग. °स्मिन्नुपका° । ४ ग. °पाद्यापकारव° दि° त्यति° । ५ क °द्य बीजवत्यति° । ख घ. °द्य बीजवृत्त्यति° । ६ क. °पेक्षः का° । ७ ग. °दिनिष्ठा° । ८ घ. जात । ९ ख. °स्मात्क्षणि° । ग. °स्मात्क्रमेणाक्ष° । १० क. ख. °त्काला° । ११ घ. °र्थ्ययोरप्रसङ्गात् । तद्वि° । १२ घ. °धकाप्र° । १३ ग. °ङ्कुरे । अ° । १४ ङ. °योरतिप्र° । १५ ख. घ. °रित्यप्र° । १६ ग. तत्सम° । १७ क. ग. घ. °कार्यं क° । ख. °कार्यम् । करो° ।

मतीतानागतकाले तत्कालवर्तिन्यावर्थक्रिये भाव इति प्रसङ्गव्यत्ययो विपर्ययः । तस्माद्विपक्षे क्रमयौगपद्यव्यावृत्त्या व्यापकानुपलम्भेनाधिगत-व्यतिरेकव्याप्तिकं प्रसङ्गतद्विपर्ययबलाद्गृहीतान्वयव्याप्तिकं[च]सत्त्वं क्षणि-कत्वपक्ष एव व्यवस्थास्यतीति सिद्धम् । तदुक्तं ज्ञानश्रिया—

यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा अमी
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा * न सा ।
नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवे—
+ द्द्वेधाऽपि क्षणभङ्गसंगतिरतः साध्ये च विश्राम्यति ॥ इति ।

न च कणभक्षाक्षचरणादिपक्षकक्षीकारेण सत्तासामान्ययोगित्वमेव सत्त्वमिति मन्तव्यं सामान्यविशेषसमवायानामसत्त्वप्रसङ्गात् । न च तत्र स्वरूपसत्तानिबन्धनः सद्व्यवहारः प्रयोजकगौरवापत्तेः । अनुगतत्वाननु-गतत्वविकल्पपराहतेश्च, सर्षपमहीधरादिषु विलक्षणेषु क्षणेष्वनुगतस्याऽऽ-कारस्य मणिषु सूत्रवद्भूतगणेषु गुणवच्चाप्रतिभासनाच्च । किंच सामान्यं सर्वगतं स्वाश्रयसर्वगतं वा । प्रथमे सर्ववस्तुसंकरप्रसङ्गः, अप-सिद्धान्तापत्तिश्च, यतः प्रोक्तं प्रशस्तपादेन स्वविषयसर्वगतमिति । किंच विद्यमाने घटे वर्तमानं सामान्यमन्यत्र जायमानेन संबध्यमानं तस्मादाग-च्छत्संबध्यते, अनागच्छद्वा, आद्ये द्रव्यत्वापत्तिः, द्वितीये संबन्धानु-पपत्तिः । किंच विनष्टे घटे सामान्यमवतिष्ठते, विनश्यति, स्थानान्तरं गच्छति वा । प्रथमे निराधारत्वापत्तिः, द्वितीये नित्यत्ववाचोयुक्तच-युक्तिः, तृतीये द्रव्यत्वप्रसक्तिः, इत्यादिदूषणग्रहग्रस्तत्वात्सामान्यमप्रामा-णिकम् । तदुक्तम्—

अन्यत्र वर्तमानस्य ततोऽन्यस्थानजन्मनि ।
तस्मादचलतः स्थानाद्वृत्तिरित्यतियुक्तता ॥
यत्रासौ वर्तते भावस्तेन संबध्यते न तु ।
तद्देशिनं च व्याप्नोति किमप्येतन्महाद्भुतम् ॥
न याति न च तत्राऽऽसीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाऽऽधारमहो व्यसनसंततिः ॥ इति ।

* स्थिरेषु स्थिरा इति । घ.पु.टिप्पण्याम् । + नानात्वेन स्थिरत्व एकविधत्वेनास्थिरत्वेऽपि । इति घ. पु. टिप्पण्याम् ।

१ ग. घ. °ङ्गस्तद्व्यत्ययो वि° । २ घ. मितिः । ३ क. °जको गौ° । ४ क. ग. घ. °तकणे । ५ घ. °स्तपदे° । ६ क. ख. ग. घ. °णग्र त° । ७ घ. प्राप्नोति ।

अनुवृत्तप्रत्ययः किमालम्बन इति चेत् । अङ्ग, अन्यापोहालम्बन एवेति संतोष्टव्यमायुष्मतेत्यलमतिप्रसङ्गेन ।

सर्वस्य संसारस्य दुःखात्मकत्वं सर्वतीर्थकरसंमतम् । अन्यथा तन्नि-विवर्तयिषूणां तेषां तन्निवृत्त्युपाये प्रवृत्त्यनुपपत्तेः । तस्मात्सर्वं दुःखं दुःखमिति भावनीयम् । ननु किंवदिति पृष्टे दृष्टान्तः कथनीय इति चेन्नैवं स्वलक्षणानां क्षणानां क्षणिकतया सालक्षण्याभावात् । नैतेन सदृशमपरमिति वक्तुमशक्यत्वात् । ततः स्वलक्षणं स्वलक्षणमिति भावनीयम् । एवं शून्यं शून्यमपि भावनीयं स्वप्ने जागरणे च न मया दृष्टमिदं रजतादीति विशिष्टनिषेधस्योपलम्भात् । यदि दृष्टं सत्तदा तद्विशिष्टस्य दर्शनस्येदंताया अधिष्ठानस्य च तस्मिन्नध्यस्तस्य रजतत्वा-देस्तत्संबन्धस्य च समवायादेः सत्त्वं स्यात् । न चैतदिष्टं कस्यचिद्वा-दिनः । न चार्धजरतीयमुचितं न हि कुक्कुट्या एको भागः पाकायापरो भागः प्रसवाय कल्प्यतामिति कल्प्यते । तस्मादध्यस्ताधिष्ठानतत्संबन्ध-दर्शनद्रष्टृणां मध्य एकस्यानेकस्य वाऽसत्त्वे निषेधविषयत्वेन सर्वस्यासत्त्वं बलादापतेदिति भगवतोपदिष्टे माध्यमिकास्तावदुत्तमप्रज्ञा इत्थमचीक-थन्–भिक्षुपादप्रसारणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानु-कूलवेदनीयत्वानुगतसर्वसत्यत्वभ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यव-सानम् । अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव । तथा हि यदि घटादेः सत्त्वं स्वभावस्तर्हि कारकव्यापारवैयर्थ्यम् । असत्स्वभाव इति पक्षे प्राचीन एव दोषः प्रादुःष्यात् । यथोक्तम्–

न सतः कारणापेक्षा व्योमादेरिव युज्यते ।
कार्यस्यासंभवी हेतुः खपुष्पादेरिवासतः ॥ इति ।

विरोधादितरौ पक्षावनुपपन्नौ । तदुक्तं भगवता लङ्कावतारे–

---

१ क. ग. घ. °विवृत्सूनां ते° । २ घ. दुःखमि° । ३ क. ख. ग. घ. °ि तदि° । ४ ग. °ष्टान्तैः क° । ५ ख. ग. घ. °या स्वाल° । ६ क. ख. घ. °त् । एते° । ७ क. ग. घ. °न्यमित्यपि । ८ च सर्वात° । ९ घ. °तत्वस° । १० च. °मस्याऽऽव° । ११ क. ख. ग. °तुष्कोणवि° । घ. °तुष्कवि° । १२ क. ख. ग. ङ. °सत्त्वं स्वभा° । घ. °सत्त्वं मा° । च. °सत्त्वं सहाय इ° । १३ ग. तदुक्तम् । १४ ख. ङ. °भवो हे° । १५ च. °वदल° । १६ क. ख. ग. °ताऽलङ्काराव° ।

बुद्ध्या[1] विविच्यमानानां[2] स्वभावो[3] नावधार्यते ।
अतो निरभिलप्यास्ते[4] निःस्वभावाश्च दर्शिताः ॥ इति ।
इदं वस्तुबलायातं[5] यद्वदन्ति[6] विपश्चितः ।
यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥ इति च ।

न क्वचिदपि पक्षे व्यवतिष्ठत इत्यर्थः । दृष्टार्थव्यवहारश्च[7] न स्वप्नव्य[8]वहारवत्[9]संवृत्या संगच्छते । अत एवोक्तम्–

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पनाः ॥ इति ।

[10] तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ परनिर्वाणं[11] शून्यरूपं सेत्स्यतीति वयं कृतार्थाः, नास्माकमुपदेश्यं किंचिदस्तीति । शिष्यैस्तावद्योगश्चाऽऽचारश्चेति द्वयं करणीयम् । तत्राप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योगः । गुरूक्तस्यार्थस्याङ्गीकरणमाचारः । गुरूक्तस्याङ्गीकरणादुत्तमाः पर्यनुयोगस्याकरणादधमाश्च, अतस्तेषां माध्यमिका इति प्रसिद्धिः । गुरूक्तभावनाचतुष्टयं[12] बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्याऽऽन्तरस्य शून्यत्वं चाङ्गीकृतं कथमिति पर्यनुयोगस्य करणात्केषांचिद्योगाचारप्रथा[13] । एषा हि तेषां परिभाषा–स्वयंवेदनं[14] तावदङ्गीकार्यम्, अन्यथा जगदान्ध्यं प्रसज्येत[15] । तत्कीर्तितं धर्मकीर्तिना–

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति । इति ।

बाह्यं ग्राह्यं नोपपद्यत एव विकल्पानुपपत्तेः । अर्थो ज्ञानग्राह्यो[16] भावादुत्पन्नो भवति, अनुत्पन्नो वा । न पूर्वः, उत्पन्नस्य स्थित्यभावात् । नापरोऽनुत्पन्नस्यासत्त्वात् । अथ मन्येथाः, अतीत एवार्थो ज्ञानग्राह्यस्तज्जनकत्वादिति । तदपि बालभाषितं वर्तमानतावभासविरोधात् । इन्द्रियादेरपि ग्राह्यत्वप्रसङ्गाच्च । किं च ग्राह्यः किं परमाणुरूपोऽर्थो[17]ऽवयविरूपो वा । न चरमः, कृत्स्नैकदेशविकल्पादिना तन्निराकरणात् ।

---

१ क. °ध्यादिवाच्य° । २ च. °च्य द्रष्टव्यः स्व° । ३ च. °वो नैव । ४ ख. घ. °भिलयास्ते । ग. °भिल पास्ते । ५ च. °लाधीतं । ६ क. ख. घ. °दस्ति वि° । ७ च. °हारोऽव्यवहारश्च स्व° । ८ क. °श्चन स्व° । ग. °श्च स्व° । ९ घ. °वत् । बुद्धिकल्पितमात्रेण न सत्यविषयं विना दृष्टव्यवहारोऽपि सत्यविषयको न स्वप्नवत्संवृत्या संगच्छत इत्यर्थः । अ° । १० घ. °देत-देवं । ११ घ. परं नि° । १२ क. ग. °रुक्तं भा° । १३ च. °र इति प्र° । १४ च. स्वसंवे° । १५ च. प्रसज्जेत् । १६ च. °ह्यो भवन्नुत्प° । १७ क. ख. ग. घ. °रूपार्थो° । च. °रूपोऽर्थः किंवाऽवयविरूपः । न ।

न प्रथमः, अतीन्द्रियत्वात्षट्केन युगपद्योगस्य बाधकत्वाच्च । यथोक्तम्—

*षट्केन युगपद्योगात्परमाणोः षडंशता ।
तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः ॥ इति ।

तस्मात्स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । तदुक्तम्—

नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्य नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥ इति ।

ग्राह्यग्राहकयोरभेदश्चानुमातव्यः[3] । यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते, यथा ज्ञानेनाऽऽत्मा । वेद्यन्ते तैश्च नीलादयः । भेदे हि सत्यधुनाऽनेनार्थस्य संबन्धित्वं न स्यात्तादात्म्यस्य नियमहेतोरभावात्तदुत्पत्तेरनियामकत्वात् । यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः । अत्राप्यनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम् । यथोक्तम्—

सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥ इति ।
अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ इति च ।

न च रसवीर्यविपाकादिसमानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यं, वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन[14] विभिन्नग्राह्यग्राहकाकाररूपवत्तया[12][13] तिमिराद्युपहताक्ष्णां केशोण्ड्रनाडीज्ञानाभेदवेदनाद्युपप्लववासनासामर्थ्याद्व्यवस्थोपपत्तेः[16] पर्यनुयोगायोगात्[17] । यथोक्तम्—

* मनःसहितज्ञानेन्द्रियेणेति घ. पु. टिप्पण्याम् ।

१ क. ख. °शिप्र° । २ ग. प्रकाशिता । ३ क. ख. ग. घ. वेद्यते । ४ घ. संबन्धत्वं । ५ क. ग. °यं ग्राह° । ६ च. °त्वाभा° । ७ क. °हा वां° । ख. °वाहे भे° । ग. °वाहभे° । ८ घ. °दृश्य इन्दोरिव द्व° । ९ क. ग. °गो विबु° । १० घ. °मानं विद्यमानजडस्य चैतन्यात्मावभासनमित्याशा° । ११ घ. °कानामिदं स्या° । १२ च. °पविप्लववत्त° । १३ घ. °वत्तायास्तिमि° । १४ ग. घ. केशेन्द्रना° । च. केशोण्ड्रकादिज्ञा° । १५ क. ख. ग. घ. °ज्ञानभे° । १६ च. °वचना° । १७ घ. ङ. °गात् ।

अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते ।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ॥
तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् ।
यदा तदा न संचोद्या ग्राह्यग्राहकलक्षणा ॥ इति ।

तस्माद्बुद्धिरेवानादिवासनावशादनेकाकाराऽवभासत इति सिद्धम् । ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति ।

अन्ये तु मन्यन्ते यथोक्तं बाह्यं वस्तुजातं नास्तीति, तदयुक्तं प्रमाणाभावात् । न च सहोपलम्भनियमः प्रमाणमिति वक्तव्यं, वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन संदिग्धविपक्षव्यावृत्तिकत्वात् । ननु भेदे सहोपलम्भनियमात्मकं साधनं न स्यादिति चेन्न, ज्ञानस्यान्तर्मुखतया ज्ञेयस्य बहिर्मुखतया च भेदेन प्रतिभासमानत्वादेकदेशत्वैककालत्वलक्षणसहत्वनियमासंभवाच्च । नीलाद्यर्थस्य ज्ञानाकारत्वेऽहमिति प्रतिभासः स्यात् । नत्विदमिति प्रतिपत्तिः प्रत्ययादव्यतिरेकात् । अथोच्यते ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या बहिर्वद्भेदेन प्रतिभासत इति, न च तत्राहमुल्लेख इति । तथोक्तम्—

परिच्छेदान्तराद्योऽयं भागो बहिरिव स्थितः ।
ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः ॥ इति ।

यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते ॥ इति च ।

तदयुक्तं बाह्यार्थाभावे तदुत्पत्तिरहिततया बहिर्वदित्युपमानोक्तेरयुक्तेः । न हि वसुमित्रो वन्ध्यापुत्रवदवभासत इति प्रेक्षावानाचक्षीत । भेदप्रतिभासस्य भ्रान्तत्वेऽभेदप्रतिभासस्य प्रामाण्यं, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमिति परस्पराश्रयप्रसङ्गाच्च, अविसंवादान्नीलतादिकमेव संविदाना बाह्यमेवोपाददते जगत्युपेक्षन्तेऽवान्तरमिति व्यवस्थादर्शनाच्च ।

---

१ घ. °च्छेदो वि° । २ ग. °लम्भात्म° । ३ ख. घ. °याऽर्थस्य । ४ क. ख. ग. च. °न तयैक° । ५ घ. °च्च । किंच नीला° । ६ च. °पि भ्रा° । ७ क. °कारभ्रा° । ८ ख. °ह्यार्थभा° । ९ क. ख. ग. घ. तद्व्युत्प° । १० ख. °सुपुत्रो । ११ क. ख. ग. घ. °ण्ये भे° । १२ घ. °लत्वादि° । १३ ख °दानो बा° । १४ च. °ते महत्यु° । १५ ग. °क्षतेऽवा° । १६ क. ग. घ. °न्ते चान्त° ।

एवं चायमभेदसाधको हेतुर्गौमयपायसीयन्यायवदाभासतां भजेत् । अतो बहिर्वदिति वदता बाह्यं ग्राह्यमेवेति भावनीयमिति भवदीय एव बाणो भवन्तं प्रहरेत् ।

ननु ज्ञानाभिन्नकालस्यार्थस्य बाह्यत्वमनुपपन्नमिति चेत्तदनुपपन्नम् । इन्द्रियसंनिकृष्टस्य विषयस्योत्पाद्ये ज्ञाने स्वाकारसमर्पकतया समर्पितेन चाऽऽकारेण तस्यार्थस्यानुमेयतोपपत्तेः । अत एव पर्यनुयोगपरिहारौ समग्राहिषाताम्—

भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ।
हेतुत्वमेव च व्यक्तेर्ज्ञानाकारार्पणक्षमम् ॥ इति ।

तथा च यथा पुष्ट्या भोजनमनुमीयते,[11] यथा च भाषया देशः, यथा वा संभ्रमेण स्नेहः, तथा ज्ञानाकारेण ज्ञेयमनुमेयम् । तदुक्तम्—

अर्थेन घटयत्येनां न हि मुक्त्वाऽर्थरूपताम् ।
तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपता ॥ इति ।

न हि वित्तिसत्तैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषात् । तां तु सारूप्यमाविशत्सरूपयितुं घटयेदिति च । तथा बाह्यार्थसद्भावे प्रयोगः- ये यस्मिन्सत्यपि कादाचित्कास्ते सर्वे तदतिरिक्तसापेक्षाः । यथाऽविवक्षति, अजिगमिषति मयि वचनगमनप्रतिभासा विवक्षु[16]जिगमिषुपुरुषान्तरसंतानसापेक्षाः । तथा च विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखिना[18] इति । तत्राऽऽलयविज्ञानं नामाहमास्पदं विज्ञानं, नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम् । यथोक्तम्—

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥ इति ।

---

१ क. ख. °यवाय° । २ च. °यसन्या° । ३ क. ख. ग. घ. °जेत । अ° । ४ च. °ह्यं बाह्य° । ५ च. °ति गणनीयानियमतो गणनीयमेव । ६ ख. र्थबाह्य° ७ ग. °ष्टवि° । ८ च. °द्ये स्वा° । ९ ग. °व व्यक्तित्वं ज्ञाना° । च °व युक्तिज्ञा ज्ञाना° । १० ख. यथा यथा । ११ ख. °ते तथा । १२ ख. °था च ज्ञा° । १३ घ. नुज्ञेय° । १४ च. °टधर्मेण न हि मुख्यार्थरू° । १५ घ. °तु । तत्तत्सारूप्यमाविशती तत्तत्सरूपतां घट° । १६ ख. विविक्षु° । १७ क. °रसत्तान° । घ. °रसा° । १८ ख. नीलोल्ले° । १९ वुल्लेखिन इ° । २० च. °ख च. प्रवृत्तिविज्ञानं त° ।

तस्मादालयविज्ञानसंतानातिरिक्तः[1] कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव, न वासनापरिपाकप्रत्ययः[2][3] कादाचित्कत्वात्कदाचिदुत्पाद इति वेदितव्यम्[4] । विज्ञानवादिनये हि वासनानामेकसंतानवर्तिनामालयविज्ञानानां[5] तत्तत्प्रवृत्तिजननशक्तिः[6], तस्याश्च स्वकार्योत्पादं[7] प्रत्याभिमुख्यं परिपाकः । तस्य च प्रत्ययः[8] कारणं स्वसंतानवर्तिपूर्वक्षण[9]कक्षी[10] क्रीयते, संतानान्तरनिबन्धनत्वानङ्गीकारात् । ततश्च प्रवृत्तिज्ञानजननालयविज्ञानवर्तिवासनापरिपाकं प्रति सर्वेऽप्यालयविज्ञानवर्तिनः[11] क्षणाः समर्था एवेति वक्तव्यम् । न चेदेकोऽपि[12] न समर्थः स्यादालयविज्ञान[13]संतानवर्तित्वाविशेषात् । सर्वे समर्था इति पक्षे कार्यक्षेपानुपपत्तिः[14] । ततश्च कादाचित्कत्वानिर्वाहाय[15] शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान्प्रतीत्योत्पद्यन्त इति चतुरेणानिच्छताऽप्यच्छमतिना स्वानुभवमनाच्छाद्य परिच्छेत्तव्यम् । ते चत्वारः प्रत्ययाः प्रसिद्धा आलम्बनसमनन्तरसहकार्यधिपातिरूपाः । तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य[16] चित्तस्य नीलालम्बनप्रत्ययान्नीलाकारता[17] भवति, समनन्तरप्रत्ययात्प्राचीनज्ञानाद्बोधरूपता[18], सहकारिप्रत्ययादालोकाच्चक्षुषोऽधिपतिप्रत्ययाद्विषयग्रहणप्रतिनियमः[19], विदितस्य[20] ज्ञानस्य रसादिसाधारण्यप्राप्तेर्नियामकं[21] चक्षुरधिपतिर्भवितुमर्हति । लोके नियामकस्याधिपतित्वोपलम्भात् । एवं चित्तचैत्तात्मकानां[22] सुखादीनां चत्वारि कारणानि द्रष्टव्यानि[23] । एवं चित्तचैत्तात्मकः स्कन्धः पञ्चविधो रूपविज्ञानवेदनासंज्ञा[24][25]संस्कारसंज्ञकः । तत्र रूप्यन्त[26] एभिर्विषया इति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः । आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः । प्रागुक्तस्कन्धद्वयसंबन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः । गौरित्यादिशब्दोल्लेखि[27]सविज्ञानप्रवाहः[28] संज्ञा[29]-

१ ग. °ज्ञानासं° । २ च. °नाप्र° । ३ ख. ग. °त्ययका° । ४ ख °म् । दिव्यज्ञानवादिनं ये । ५ ख. °लयं वि° । ३ ख. लयं वि° । ६ ख. °त्तिविज्ञानज° । ७ ख. च. कार्य प्र° ८ घ. °यः स्व । ९ ख. ग. °त्वाङ्गी° १० ख. ग. °त्ति विज्ञा° । च. °त्तिविज्ञानजनकाल° । ११ च. नवृत्तिसंतानक्ष° । १२ ख. °को न° । १३ ग. °नव° । १४ ग °कालक्षे° । १५ च. °त्कनि° । १६ क. ख. ग. घ. °लादिभा° । १७ च. लाद्याल° । १८ घ. °नाद्बाध° । १९ च. °कात्स्पष्टता चक्षु° । २० च. उदितस्य । २१ ख. °रण्ये प्रा° । २२ क. ख. ग. घ. °चैत्यात्म° । २३ च. °नि सोऽयं वि° । २४ ख. °दसंज्ञानसंज्ञानसंस्का° । २५ घ. °ज्ञानसं° । २६ च. °प्य ए° । २७ च. °दिप्रत्ययोल्लेखिसंवित्प्रवा । २८ ङ. °खिसंवि° । २९ ख. °ज्ञानस्क° ।

स्कन्धः । वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धः ।

तदिदं सर्वं दुःखं दुःखायतनं दुःखसाधनं चेति भावयित्वा[1] तन्निरोधोपायं तत्त्वज्ञानं संपादयेत् । अत एवोक्तं दुःखसमुदायनिरोधमार्गाश्चत्वारः, आर्यस्य[2] बुद्धाभिमतानि[3] तत्त्वानि । तत्र दुःखं प्रसिद्धं, समुदायो दुःखकारणं, तद्द्वि[4]विधं, प्रत्ययोपनिबन्धनो हेतूपनिबन्धनश्च । तत्र प्रत्ययोपनिबन्धनस्य संग्राहकं सूत्रम् । "इदं कार्यं[5] ये अन्ये हेतवः प्रत्ययन्ति" गच्छन्ति तेषामयमानानां हेतूनां भावः प्रत्ययत्वं कारणसमवायः, तन्मात्रस्य फलं, न चेतनस्य[6] कस्यचिदिति सूत्रार्थः । यथा बीजहेतुरङ्कुरो धातूनां षण्णां स[7]मवायाज्जायते । तत्र पृथिवीधातुरङ्कुरस्य काठिन्यं गन्धं च जनयति, अब्धातुः स्नेहं रसं च जनयति, तेजोधातू रूपमौष्ण्यं च, वायुधातुः स्पर्शनं चलनं च, आकाशधातुरवकाशं शब्दं च, ऋतुधातुर्यथायोगं पृथिव्यादिकम् । हेतूपनिबन्धनस्य[8] च संग्राहकं सूत्रम्, उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां[9] धर्माणां धर्मता धर्मस्थितिता धर्मनियामकता च प्रतीत्य समुत्पादानुलोमतेति । तथागतानां बुद्धानां मते धर्माणां कार्यकारणरूपाणां[10] या धर्मता कार्यकारणभावरूपा [11]एषोत्पादादनुत्पादाद्वा स्थिता, यस्मिन्सति यदुत्पद्यते तत्तस्य[12] कारणस्य कार्यमिति धर्मतेत्यस्य विवरणं, धर्मस्य कार्यस्य कारणानतिक्रमेण स्थितिः स्वार्थिकस्तलूप्रत्ययः । धर्मस्य कारणस्य कार्यं प्रति नियामकता । [13]नन्वयं [14]कार्यकारणभावश्चेतनमन्तरेण न संभवतीति अत उक्तं कारणे सति तत्प्रतीत्य प्राप्य समुत्पादेऽनुलोमतानुसारिता या सैव धर्मतोत्पादादनुत्पादाद्वा धर्माणां स्थिता । न चात्र कश्चिच्चेतनोऽधिष्ठातोपल[15]भ्यत इति सूत्रार्थः । यथा प्रतीत्य समुत्पादस्य हेतूपनि[16]बन्धः, बीजादङ्कुरोऽङ्कुरात्काण्डं काण्डान्नालो नालाद्गर्भस्ततः शूकं ततः पुष्पं ततः फलं, न चात्र बाह्ये समुदाये कारणं बीजादिकार्यमङ्कुरादि वा [17]चेतीयते । अहमङ्कुरं निर्वर्तयामि, अहं बीजेन निर्वर्तित इति । एव-

१ ख. °त्वा वृत्तिरोधापा° । २ घ. °र्यबु° । ३ त्त. °बुद्धस्याभिम° । ४ घ. °द्विधा° । ५ ग.
°र्ये अन्ये° । ६ घ. °स्यचि° । ७ ख. °समुदायाज्जा° । ८ ग. °न्धस्य° । ९ ग. °स्थिते चैषां° ।
१० ख. ग. °णां धर्म° । ११ क. °एवोत्पा° । घ. °एषामुत्पा° । १२ घ. °स्य कार्य° । १३ ख.
°नन्वियं । १४ घ. °कारण° । १५ क. °लभ्य इति° । १६ च. °बन्धनः । बी° । १७ क. ग.
घ. °चेतयते° । ख. °चेतेयन्ते° ।

माध्यात्मिकेष्वपि कारणद्वयमवगन्तव्यम् । पुरःस्थिते[1] प्रमेयाब्धौ ग्रन्थविस्तरभीरुभि[2]रुपरम्यते । तदुभय[3]निरोधः, तदनन्तरं विमलज्ञानोदयो[4] वा मुक्तिः । तन्निरोधोपायो मार्गः स च तत्त्वज्ञानं, तच्च प्राचीनभावनाबलाद्भवतीति परमं रहस्यम् । सूत्रस्यान्तं पृच्छतां कथितं भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति भगवताऽभिहिततया सौत्रान्तिकसंज्ञा संजातेति ।

केचन बौद्धा बाह्येषु गन्धादिषु आन्तरेषु रूपादिस्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति, प्राथमिकान्विनेयानचीक[5]थद्भगवान्, द्वितीयांस्तु विज्ञान[6]मात्रग्रहाविष्टान्विज्ञानमेवैकं सदिति, तृतीयानुभयं सत्यमित्या[7]स्थितान्विज्ञेयमनुमेयमिति, सेयं विरुद्धा भाषेति वर्णयन्तो वैभाषिकाख्यया ख्याताः । एषा हि तेषां परिभाषा समुन्मिषति । विज्ञेयानुमेयत्ववादे प्रात्यक्षिकस्य कस्यचिदप्यर्थस्याभावेन व्याप्तिसंवेदनस्थानाभावेनानुमानप्रवृत्त्यनुपपत्तेः[8] सकललोकानुभवविरोधश्च । ततश्चार्थो द्विविधः, ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्पकरूपं प्रमाणं कल्पनापोढत्वात्[9], अध्यवसायः सविकल्पकरूपोऽप्रमाणं कल्पनाज्ञानत्वात् ।

तदुक्तम्—

कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् ।
विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः ॥ इति ।
ग्राह्यं वस्तुप्रमाणं हि ग्रहणं यदितोऽन्यथा ।
न तद्वस्तु[10] न तन्मानं शब्दलिङ्गेन्द्रियादिजम् ॥ इति च ।

ननु सविकल्पकस्याप्रामाण्ये कथं ततः प्रवृत्तस्यार्थप्राप्तिः संवादश्चोपपद्येयातामिति चेन्न तद्भद्रं मणिप्रभाविषयमणिविकल्पन्यायेन पारम्पर्येणार्थप्रतिलम्भसंभवेन तदुपपत्तेः । अवशिष्टं[11] सौत्रान्तिकप्रस्तावे प्रपञ्चितमिति नेह प्रतन्यते । न च विनेयाशयानुरोधेनोपदेशभेदः सांप्रदायिको न भवतीति भणितव्यम्, यतो भणितं बोधचित्तविवरणे—

---

१ क. ख. ग. °तेऽपि प्र° । २ घ. °भिरितिन्यायेनोप° । ३ ख. °यविरो° । ४ च. °दयाम्° ।
५ च. °नचक° । ६ ख. °नं प्रहा° । ७ क. °त्याशयस्थि° । ग. °त्याहस्थि° । च. °त्यास्थायस्थि° ।
८ ख. ग °पत्तिः स° । ९ क. ख. ग. °नापोढ° । घ. °नादूरापेतत्वात्° । १० क. °ह्यवस्तु° ।
११ क. °शिष्टसौ° ।

देशना लोकनाथानां सत्त्वाशयवशानु[1]गाः ।
भि[2]द्यन्ते बहुधा लोके[3] उपायैर्बहुभिः किल[4] ॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणाः[5] ।
भिन्ना हि देशना भिन्ना शून्यताऽद्वयलक्षणा ॥ इति ।

द्वादशायतनपूजा श्रेयस्करीति बौद्धनये प्रसिद्धम्—
अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै ।
प[6]रितः पूजनीयानि किमन्यैरिह पूजितैः ॥
ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च ।
मनो बुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः ॥ इति ।

विवेकविलासे बौद्धमतमित्थमभ्यधायि—
बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम् ।
आर्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥
दुःखमायतनं चैव ततः समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि तु ॥
रागादीनां गणो[7]ऽयं स्यात्समुदेति नृणां हृदि ।
आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः ॥
क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा ।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥
प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा ।
चतुष्प्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥
अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते ।
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥
आकारसहिता बुद्धिर्योगाचारस्य संमता ।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥

१ ग. °नुगा । भि° । २ ग. °भिद्यते° । ३ क. ख. ग. °लोक उ° । ४ क. ग. च. पुनः ।
५ मूलपु. क्षणा । भि° । ६ घ. परीतः * । ७ ख. °णो यस्मात्° ।

* घ. स्वशिष्यादिभिरिति शेषः ।

रागादिज्ञानसंतानवास[१]नोच्छेदसंभवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥
कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् ।
संघो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः ॥ इति ।
इति सर्वदर्शनसंग्रहे बौद्धदर्शनम् ॥

---

## अथाऽऽर्हतदर्शनम् ॥ ३ ॥

---

तदित्थं मुक्तकच्छानां मतमसहमाना विवसनाः कथंचित्स्थायित्वमास्थाय क्षणिकत्वपक्षं प्रतिक्षिपन्ति । यद्यात्मा कश्चि[२]न्नाऽऽस्थीयेत[३] स्थायी तथाऽपीह लौकिकफलसाधनसंपादनं विफलं भवेत् । न ह्येतत्[४]संभविष्यति, अन्यः करोत्यन्यो भुङ्क्ते इति । तस्माद्योऽहं प्राक्कर्माकरवं सोऽहं संप्रति तत्फलं भुञ्जे इति । पूर्वापरकालानुयायिनः स्थायिनस्तस्य स्पष्टप्रमाणावसिततया पू[५]र्वापरभागविकलकालकलावस्थि[६]तिलक्षणक्षणिकता परीक्षकै[७]रर्हद्भिर्न परिग्रहार्हा । अथ मन्येथाः प्रमा[८]णवत्त्वादायातः प्रवाहः केन वार्यत इति न्यायेन यत्सत्तत्क्षणिकमित्यादिना प्रमाणेन क्षणिकतायाः प्रमितत[९]या तदनुसारेण समानसंतानवर्तिनामेव प्राचीनः प्रत्ययः कर्मक[१०]र्ता उत्तरः प्रत्ययः फलभोक्ता । न चातिप्रसङ्गः कार्यकारणभावस्य नियामकत्वात् । यथा मधुररसभावितानामाम्रबीजानां परिकर्षितायां भूमावुप्तानामङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया फले माधुर्यनियमः । यथा वा लाक्षारसावसिक्तानां कार्पासबीजादीनामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियमः ।

यथोक्तम्–

यस्मिन्नेव हि संताने आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता य[११]था ॥
कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते ।
शक्तिराधीयते तत्र काचित्तां किं ? न पश्यसि ॥ इति ।

---

१ च. °सनाच्छे° । २ क. °श्चि त्स्थायी नास्थीयेत त° । ख. °श्चिन्नास्थीयीत । ग. °श्चिन्नास्थीयेत स्थायी नास्थीमेत त° । ३ च. °त तदा येऽपि लौकिकपारलौ° । ४ च. संभवति । ५ क. ग. °पूर्वेप° । ६ च. °स्थितल° । ७ च. °र्हद्भिः प° । ८ क. °णबलादा° । ९ ख. °ततायां° । १० च. °र्तातदुत्त° । ११ ख. °तथा° ।

तदपि काशकुशावलम्बनकल्पं विकल्पासहत्वात् । जलधरादौ दृष्टान्ते क्षणिकत्वमनेन प्रमाणेन प्रमितं प्रमाणान्तरेण वा । नाऽऽद्यः, भवदभिमतस्य क्षणिकत्वस्य[1] क्वचिदप्यदृष्टचरत्वेन दृष्टान्तासिद्धावस्यानुमानस्यानुत्थानात् । न द्वितीयः, तेनैव न्यायेन सर्वत्र क्षणिकत्वसिद्धौ सत्त्वानुमानवैफल्यापत्तेः । अर्थक्रियाकारित्वं सत्त्वमित्यङ्गीकारे मिथ्यासर्पदंशादेरप्यर्थक्रियाकारित्वेन सत्त्वापाताच्च । अत एवोक्तम्—उत्पादव्ययध्रौव्ययुक्तं सदिति । अथोच्यते सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासात्तत्सिद्धिरिति तदसाधु[2] स्यात्, वादिनामनैकान्ततावादस्येष्टतया विरोधासिद्धेः । यदुक्तं कार्पासादिदृष्टान्त इति तदुक्तिमात्रं युक्तेरनुक्तेः[3], तत्रापि निरन्वय[4]नाशस्यानङ्गीकाराच्च । न च संतान्यतिरेकेण[5] संतानः प्रमाणपदवीमुपारोढुमर्हति[6] । तदुक्तम्[7]—

सजातीयाः क्रमोत्पन्नाः प्रत्यासन्नाः परस्परम् ।
व्यक्तयस्तासु संतानः[8] स चैक इति गीयते ॥ इति ।

न च कार्यकारणभावनियमोऽतिप्रसङ्गं[9] भङ्क्तुमर्हति । तथा हि उपाध्यायबुद्ध्यनुभूतस्य शिष्यबुद्धिः स्मरेत्तदुपचितकर्मफलमनुभवेद्वा तथा च कृतप्रणाशाकृताभ्यागमप्रसङ्गः । तदुक्तं सिद्धसेनवाक्यकारेण—

कृतप्रणाशाकृतकर्मभो*ग-
भवप्रमोक्षस्मृतिभङ्गदोषान् ।
उपेक्ष्य[10] साक्षात्क्षणभङ्गमिच्छ-
न्नहो महासाहसिकः परोऽसौ ॥ इति ।[11]

किंच क्षणिकत्वपक्षे ज्ञानकाले ज्ञेयस्यासत्त्वेन ज्ञेयकाले ज्ञानस्यासत्त्वेन च ग्राह्यग्राहकभावानुपपत्तौ[12] सकललोकयात्राऽस्तमियात् । न च[13] समसमयवर्तिता शङ्कनीया सव्येतरविषाणवत्कार्यकारणभावासंभवेनाग्राह्यस्याऽऽलम्बनप्रत्ययानुपपत्तेः । अथ भिन्नकालस्यापि तस्याऽऽकारा[14]र्पकत्वेन ग्राह्यत्वं, तदप्यपेशलं क्षणिकस्य ज्ञानस्याऽऽकारा[15]र्पकताश्रयताया

* भवभङ्गः परलोकाभावप्रसङ्गः प्रमोक्षभङ्गः । अन्यः क्षणोबद्धः क्षणान्तरस्य मुक्तिरिति मोक्षाभावः स्मृतिभङ्ग दोषः । नह्यन्यदृष्टोर्थोऽन्येन स्मर्यते । इति ।

१ च. °कस्य । २ च. °धुत्वाद्वादि° । ३ ख. °रयुक्तेः । घ. °नुपपत्तेः । त° । ४ क. ग. च. °यविना° । ५ क.ख ग. घ. ङ. °ता निर्व्यति° । ६ ग. °र्हति इति । त° । ७ ग. यदुक्तम् । ८ घ. संतानी° । ९ च. °ङ्गं भोक्तुं प्रभवति । १० च. अपेक्ष्य । ११ ख. °ले ज्ञेयस्या° । १२ च. °पत्तेः स° । १३ ग. °वेनग्रा° । १४ च. कामार्प° । १५ च. कामा श्र° ।

दुर्वचत्वेन साकारज्ञानवादे[1] प्रत्यादेशेन निराकारज्ञानवादेऽपि[2] योग्यतावशेन*प्रतिकर्मव्यवस्थाया:[3] स्थितत्वात्। तथा हि प्रत्यक्षेण[4] विषयाकाररहितमेव ज्ञानं प्रतिपुरुषमहमहमिकया घटादिज्ञानमनुभूयते न तु दर्पणादिवत्प्रतिबिम्बक्रान्तम्[5] । विषयाकारधारितत्वेन[6] च ज्ञानस्यार्थे दूरनिकटादिव्यवहाराय जलाञ्जलिर्वितीर्येत[7] । न चेदभिष्टापादनमेष्टव्यं[8] दवीयान्दीर्घो बह्वुरितिव्यवहारस्य निराबाधं जागरूकत्वात् । नचाऽऽकाराधायकस्य[9] तस्य[10] दवीयस्त्वादिशालितया तथा व्यवहार इति कथनीयं, दर्पणादौ तथाऽनुपलम्भात् । किंचार्थादुपजायमानं ज्ञानं यथा तस्य नीलाकारतामनुकरोति तथा यदि जडतामपि तर्ह्यर्थवत्तदपि जडं स्यात् । तथा च वृद्धिमिष्टवतो मूलमपि ते[11] नष्टं स्यादिति महत्कष्टमापन्नम् । अथैतद्दोषपरिजिहीर्षया ज्ञानं जडतां नानुकरोतीति ब्रूषे हन्त तर्हि +तस्या ग्रहणं न स्यादित्येकमनुसंधित्सतोऽपरं प्रच्यवत इति न्यायापातः । ननु मा भूज्जडताया ग्रहणं किं नश्छिन्नं×तदग्रहणेऽपि[12] नीलाकारग्रहणे[13] ÷तयोर्भेदो[14] नै=कान्तौ[15] वा भवेत् । नीलाकारग्रहणे चागृहीता जडता कथं तस्यानुरूपं[16] स्यात्, अपरथा गृहीतस्य[16] स्तम्भस्यागृहीतं त्रैलोक्यमपि[17] रूपं भवेत् । तदेतत्प्रमेयजातं प्रतापचन्द्रप्रभृतिभिरर्हन्मतानुसारिभिः[18][19] प्रमेयकमलमार्तण्डादौ[20] प्रबन्धे प्रपञ्चितमिति[21] ग्रन्थभूयस्त्वभयान्नोपन्यस्तम् ।

तस्मात्पुरुषार्थाभिलाषुकैः पुरुषैः सौगती गतिर्नानुगन्तव्या, अपित्वार्हत्येवार्हणीया[22][23] । अर्हत्स्वरूपं[24] च चन्द्रसूरिभिराप्तनिश्चयालङ्कारे निरटङ्कि ।

---

* घ. प्रतिविषयव्यवस्थाया अयुक्तत्वात् ॥ + जडतायाः घ. पुस्तके । × तदग्रहणे इत्यत्र जडतायाः इति व्याख्या ग. पुस्तके । ÷ नीलाकरजडतयोः । = ग्रहणाग्रहणरूपः । ग. पुस्तके ।

---

१ क. घ. °वादप्रत्ययादे° । २ च. नभेदे° । ३ घ. स्थाया असिध° । च. स्थायासिद्धत्वा° । ४ च. दिग्राहकम° । ५ ग. बिम्बाक्रा° । ६ च. रित्वे च । ७ च. विकीर्येत । ८ ख. घ. मिष्टमापा° । ९ ग. कारोपधा° । १० ख. कस्य° । ११ मू. पु. ङ. ते नेष्टं । १२ च. °णे नीलाकारस्यापि ग्रहणं न स्यादित्येको दोषः । तदग्रहणेऽपि निराकारस्यापि । १३ ग. °रस्यग्र° । १४ घ. न्तो भ° । १५ ग. तस्य स्वरू° । १६ ख. तस्यागृहीतं...मपि अनुरू° । १७ घ. °मप्यनुरू° । १८ च. रस्मन्म° । १९ च. °भिः सूरिभिः प्र° । २० च. °लक्षयमा° । २१ घ. °तमति । २२ च. वाऽऽश्रयणी° । २३ ग. °या । आर्ह° । २४ क. ख. °रूपमर्हच्चन्द्र° । घ. °रूपमर्हच्चन्द्र° । २५ च. पंहेमच° ।

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः ।
यथास्थितार्थवादी च देवोऽर्हन्परमेश्वरः । इति ॥

ननुं न कश्चित्पुरुषविशेषः सर्वज्ञपदवेदनीयः प्रमाणपद्धतिमध्यास्ते सद्भावग्राहकस्य प्रमाणपञ्चकस्य तत्रानुपलम्भात्तथा चोक्तं तौतातिकैः ।

सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः—
दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् ॥
न चाऽऽगमविधिः कश्चिन्नित्यसर्वज्ञबोधकः ।
न च तत्रार्थवादानां तात्पर्यमपि कल्प्यते ॥
न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते ।
न चानुवदितुं शक्यः पूर्वमन्यैरबोधितः ॥
अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान् ।
* कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ॥
अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते ।
प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः ।
सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता ।
कथं तदुभयं सिध्येत्सिद्धमूलान्तरादृते ॥
असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् ।
सर्वज्ञमवगच्छन्तस्तद्वाक्योक्तं न जानते ॥
सर्वज्ञसदृशं किंचिद्यदि पश्येम संप्रति ।
उपमानेन सर्वज्ञं जानीयाम ततो वयम् ॥
उपदेशोऽपि बुद्धस्य धर्माधर्मादिगोचरः ।
अन्यथा नोपपद्येत सार्वज्ञ्यं यदि नाभवत् ॥ इत्यादि ।

अत्र प्रतिविधीयते यदभ्यधायि सद्भावग्राहकस्य प्रमाणपञ्चकस्य तत्रानुपलम्भादिति तदयुक्तं तत्सद्भावावेदकस्यानुमानादेः सद्भावात् । तथा हि कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति

* ग. पुस्तके एतत्पङ्क्तित्रयं नास्ति ।

१ क. ख नुक° । २ घ. °स्ते । तत्सद्भा° । ३ ख. तौमातितैः । स° । घ. ङ. तौतातितैः स° । च. °तातैः । स° । ४ क. ख.ग. श्यतां ता° । ५ क. नादिरा° । ६ च. जायते । ७ च. °भवेदि° । ८ घ. °स्थितसद्भा° । ९ घ. °वादेवैक° । ङ. च. °वादेक° ।

प्रक्षीणप्रतिबन्धप्रत्ययत्वाद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि, यथाऽपगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारि । तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मा तस्मात्सकलपदार्थसाक्षात्कारीति । न तावदशेषार्थग्रहणस्वभावत्वमात्मनोऽसिद्धं चोदनाबलान्निखिलार्थज्ञानात् । नाप्यन्यथाऽनुपपत्त्या सर्वमनैकान्तात्मकं, सत्त्वादिति व्याप्तिज्ञानोत्पत्तेश्च । चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयतीत्येवंजातीयकैरध्वरमीमांसागुरुभिर्विधिप्रतिषेधविचारणानिबन्धनं सकलार्थविषयज्ञानं प्रतिपद्यमानैः सकलार्थग्रहणस्वभावकत्वमात्मनाऽभ्युपगतम् । न चाखिलार्थप्रतिबन्धकावरणप्रक्षयानुपपत्तिः सम्यग्दर्शनादित्रयलक्षणस्याऽऽवरणप्रक्षयहेतुभूतस्य सामग्रीविशेषस्य प्रतीतत्वाद् नया मुद्रयाऽपि क्षुद्रोपद्रवा विद्राव्याः ।

नन्वावरणप्रक्षयवशादशेषविषयं विज्ञानं विशदं मुख्यप्रत्यक्षं प्रभवतीत्युक्तं तदयुक्तं तस्य सर्वज्ञस्यानादिमुक्तत्वेनाऽऽवरणस्यैवासंभवादिति चेत्तन्न, अनादिमुक्तत्वस्यैवासिद्धेर्न सर्वज्ञोऽनादिमुक्तः, मुक्तत्वादितरमुक्तवद्बद्धापेक्षया च मुक्तव्यपदेशस्तद्रहिते चास्याप्यभावः स्यादाकाशवत् । नन्वनादेः क्षित्यादिकार्यपरम्परायाः कर्तृत्वेन तत्सिद्धिः । तथा हि क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति तदप्यसमीचीनं कार्यत्वस्यैवासिद्धेः । न च सावयवत्वेन तत्साधनमित्यभिधातव्यं यस्मादिदं विकल्पजालमवतरति । सावयवत्वं किमवयवसंयोगित्वं, अवयवसमवायित्वम्, अवयवजन्यत्वं, समवेतद्रव्यत्वं, सावयवबुद्धिविषयत्वं वा । न प्रथमः, आकाशादावनैकान्त्यात् । न द्वितीयः सामान्यादौ व्यभिचारात् । न तृतीयः साध्याविशिष्टत्वात् । न चतुर्थो विकल्पयुगलार्गलग्रहगलत्वात् । समवायसंबन्धमात्रवद्द्रव्यत्वं समवेतद्रव्यत्वम्, अन्यत्र समवेतद्रव्यत्वं वा विवक्षितं हेतू क्रियते । आद्ये गगनादौ व्यभिचारस्तस्यापि गुणादिसमवायवत्त्वद्रव्यत्वयोः संभवात् । द्वितीये साध्याविशिष्टता । अन्यशब्दार्थेषु समवायकारणभूतेष्ववयवेषु समवायस्य साधनीयत्वात् ।

---

१ च. °ह्रस्व° । २ च. °तिसाक्षात्कारि य° । ३ च. °त्कारी । य° । ४ क. °थावगत° । ५ घ. °बन्धलो° । ६ घ. °त्कारी । त° । ७ क. त् । नोत्पत्त्यन्य° । ख. °त् । नोत्पत्योन्य° । ग. °त् । नोपत्त्यन्य° । घ. °त् । न च व्याप्तिघटकप्रतिबन्धके प्रक्षीणता प्र हीतुं शक्या, उत्पत्त्यन्य° । ८ घ. °ति, अनुमानेन व्या° । ९ ख. °मव° । १० ग. °तीयैर° । घ. °तीयकमध्व° ।

अभ्युपगम्यैतदभाणि वस्तुतस्तु समवाय एव न समस्ति प्रमाणाभावात् । नापि पञ्चमः, आत्मादिनाऽनैकान्त्यात्तस्य सावयवबुद्धिविषयत्वेऽपि कार्यत्वाभावात् । न च निरवयवत्वेऽप्यस्य सावयवार्थसंबन्धेन सावयवबुद्धिविषयत्वमौपचारिकमित्येष्टव्यं निरवयवत्वे व्यापित्वविरोधात्परमाणुवत् । किं च किमेकः कर्ता साध्यते किंवा स्वतन्त्रः प्रथमे प्रासादादौ व्यभिचारः स्थपत्यादीनां बहूनां पुरुषाणां तत्र कर्तृत्वोपलम्भादनेनैव सकलजगज्जननोत्पत्तावितरवैयर्थ्यं च । तदुक्तं वीतरागस्तुतौ—

कर्ताऽस्ति नित्यो जगतः स चैकः
स सर्वगः सन्स्ववशः स सत्यः ।
इमाः कुहेयाः कुविडम्बनाः स्यु-
स्तेषां न येषामनुशासकस्त्वम् ॥ इति ।

अन्यत्रापि—

कर्ता न तावदिह कोऽपि यथेच्छया वा
दृष्टोऽन्यथा कटकृतावपि तत्प्रसङ्गः ।
कार्यं किमत्र भवताऽपि च तक्षकाद्यै-
राहत्य च त्रिभुवनं पुरुषः करोति ॥ इति ।

तस्मात्प्रागुक्तकारणत्रितयबलादावरणप्रक्षये[1] सार्वज्ञ्यं युक्तम् । न चास्योपदेष्ट्रन्तराभावात्सम्यग्दर्शनादित्रितयानुपपत्तिरिति भणनीयं पूर्वसर्वज्ञप्रणीतागमप्रभवत्वादमुष्याशेषार्थज्ञानस्य । नचान्योन्याश्रयतादि[2]दोषः । आगमसर्वज्ञपरम्परया बीजाङ्कुरवदनादित्वाङ्गीकारादित्यलम् ।

रत्नत्रयपदवेदनीयतया प्रसिद्धं सम्यग्दर्शनादित्रितयमर्हत्प्रवचनसंग्रहपरे[3] परमागमसारे[4] प्ररूपितं सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति । विवृतं च योगदेवेन येन रूपेण[5] जीवाद्यर्थो व्यवस्थितस्तेन रूपेणार्हता प्रतिपादिते[6] तत्त्वार्थे विपरीताभिनिवेशरहितत्वाद्यपरपर्यायं[7] श्रद्धानं सम्यग्दर्शनं तथा च तत्त्वार्थसूत्रं[8] तत्त्वार्थं श्रद्धानं सम्यग्दर्शनमिति । अन्यदपि—

१ ङ °णक्ष° । २ च. °श्रयादि° । ३ घ. °र्हद्व्च° । ४ ग. °ग्रहेपर° । ५ क. ग. घ° । °णर्वाद्य° । ६ ग. °रीतभावनार° । ७ ख. घ. °शपरत्नाहि° । ८ ख. °त्वार्थसूत्राणां श्र° ।

रुचिर्जिनोक्ततत्त्वेषु सम्यक्श्रद्धानमुच्यते ।
जायते तन्निसर्गेण गुरोरधिगमेन वा । इति ॥

परोपदेशनिरपेक्षमात्मस्वरूपं निसर्गः । व्याख्यानादिरूपपरोपदेशजनितं ज्ञानमधिगमः । येन स्वभावेन जीवादयः पदार्था व्यवस्थिताः, तेन स्वभावेन मोहसंशयरहितत्वेनावगमः सम्यग्ज्ञानम् । यथोक्तम्–

यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा ।
योऽवबोधस्तमत्राऽऽहुः सम्यग्ज्ञानं मनीषिणः । इति ॥

तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्यायकेवलभेदेन । तदुक्तम्, मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानमिति । अस्यार्थः–ज्ञानावरणक्षयोपशमे सतीन्द्रियमनसी पुरस्कृत्य व्यापृतः सन्यथार्थं मनुते, सा मतिः । ज्ञानावरणक्षयोपशमे सति मतिजनितं स्पष्टं ज्ञानं श्रुतम् । असम्यग्दर्शनादिगुणजनितक्षयोपशमनिमित्तमवच्छिन्नविषयं ज्ञानमवधिः । ईर्ष्यान्तरायज्ञानावरणक्षयोपशमे सति परमनोगतस्यार्थस्य स्फुटं परिच्छेदकं ज्ञानं मनःपर्यायः । तपः क्रियाविशेषान्यदर्थं सेवन्ते तपस्विनस्तज्ज्ञानमन्यज्ञानासंस्पृष्टं केवलम् । तत्राऽऽद्यं परोक्षं प्रत्यक्षमन्यत् । तदुक्तम्–

विज्ञानं स्वपराभासि प्रमाणं बाधवर्जितम् ।
प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥ इति ।

अन्तर्गणिकभेदस्तु सविस्तरस्तत्रैवाऽऽगमेऽवगन्तव्यः । संसरणकर्मोच्छित्तावुद्यतस्य श्रद्दधानस्य ज्ञानवतः पापगमनकारणक्रियानिर्वृत्तिः सम्यक्चारित्र्यम् । तदेतत्सप्रपञ्चमुक्तमर्हता–

सर्वथावद्ययोगानां त्यागश्चारित्रमुच्यते ।
कीर्तितं तदहिंसादिव्रतभेदेन पञ्चधा ।
अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाः ॥
न यत्प्रमादयोगेन जीवितव्यपरोपणम् ।
चराणां स्थावराणां च तदहिंसाव्रतं मतम् ॥

---

१ क. ग. °ज्ञानन्ते° । २ ग. च । ३ ग. °पेक्षात्म° । ४ क. °न बीजाद° । ५ ख. ग. °पर्यय° । ६ ग. °पर्यय° । ७ क.ख.ग घ. °र्थः । मतिज्ञ्ञा° । ८ ग. °रणीयो° । ९ क. ख. ग. °तिः । श्रुतं ज्ञा° । च. तिः । श्रुतज्ञा । १० ग. °रणीयो° । ११ ख. ग च. °म्° । स । १२ ग. °त आवरणक्ष° । १३ ख. ग. °पर्ययः° । १४ क. ग. °षादद° । १५ च. °ज्ज्ञानं सं° । १६ क. °त्राधे प° । १७ च. संसारक° । १८ ग. °सासत्यमस्ते° । १९ घ. °तव्याप° ।

प्रियं पथ्यं वचस्तथ्यं सूनृतं व्रतमुच्यते ।
तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत् ॥
अनादानमदत्तस्यास्तेयव्रतमुदीरितम् ।
बाह्याः प्राणा नृणामर्थो हरता तं हता हि ते ॥
दिव्यौदरिककामानां कृतानुमतकारितैः ।
मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ॥
+सर्वभावेषु मूर्छायास्त्यागः स्यादपरिग्रहः ।
यदसत्स्वपि जायेत मूर्छया चित्तविप्लवः ॥
भावनाभिर्भावितानि पञ्चभिः पञ्चधा क्रमात् ।
महाव्रतानि लोकस्य साधयन्त्यव्ययं पदम् ॥ इति ।

भावनापञ्चकप्रपञ्चनं च प्ररूपितम्—
हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् ।
आलोच्य भाषणेनापि भावयेत्सूनृतं व्रतम् ॥ इत्यादिना ।

एतानि सम्यग्दर्शनज्ञानचारित्राणि मिलितानि मोक्षकारणं न प्रत्येकं यथा रसायनज्ञानं श्रद्धानोवरणानि संभूय रसायनफलं साधयन्ति न प्रत्येकम् ।

अत्र संक्षेपतस्तावज्जीवाजीवाख्ये द्वे तत्त्वे स्तस्तत्र बोधात्मको जीवः, अबोधात्मकस्त्वजीवः । तदुक्तं पद्मनन्दिना—

चिदचिद्द्वे परे तत्त्वे विवेकस्तद्विवेचनम् ।
उपादेयमुपादेयं हेयं हेयं च कुर्वतः ॥
हेयं हि कर्तृरागादि तत्कार्यमविवेकिनः ।
उपादेयं परं ज्योतिरुपयोगैकलक्षणम् ॥ इति ।

सहजचिद्रूपपरिणतिं स्वीकुर्वाणे ज्ञानदर्शने उपयोगः, स परस्परप्रदेशात्तु प्रदेशबन्धात्कर्मणैकीभूतस्याऽऽत्मनोऽन्यत्वप्रतिपत्तिकारणं लक्षणं

* हरणार्तहिताहितैः सहितानां नृणां सतामेवमुत्तरत्रापि कायत इति तृतीया बहुवचनार्थे तसिस्तत्सहितस्त्यागः । तथा च बाह्यादित्यागगता अष्टादश असुचर्या ब्रह्मचर्या । घ. पु. टि.
+ सर्वभावविषयकवृद्धेस्त्यागः । मूर्च्छितं तम इत्यादौ मूर्छाशब्दस्य वृद्ध्यर्थकत्वदर्शनात् । च. पु. ।

१ च. °र्थो हारितातं हिता° । २ * घ. °रणार्तहिताहितैः । दि° । ३ ख. घ. ङ. च. °सर्वभा° । ४ ख. °हः । सद° । ५ च. श्रनस्य निरू° । ६ ग. च. °नाचर° । ७ ख. ग. च. °गः प° । ८ घ. ङ. °णं भ° ।

भवति। सकलजीवसाधारणं चैतन्यमुपशमक्षयक्षयोपशमवशादौपशमिकक्षयात्मकक्षयौपशमिकभावेन कर्मोदयवशात्कलुषान्याकारेण च परिणतजीवपर्यायजीवविवक्षायां स्वरूपं भवति। यदवोचद्वाचकाचार्यः—औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य सत्त्वमौदयिकपारिणामिकौ चेति। *अनुदयप्राप्तिरूपे कर्मण उपशमे सति जीवस्योत्पद्यमानो भाव औपशमिकः[३]। यथा पङ्के[४]ऽकलुषतां कुर्वति कतकादिद्रव्यसंबन्धादधः पतिते जलस्य स्वच्छता। कर्मणः[६] क्षयोपशमे सति जायमानो भावः क्षायिकः, यथा मोक्षः। उभयात्मा भावो मिश्रः। यथा जलस्यार्धस्वच्छता। कर्मोदये सति भवन्भाव औदयिकः। कर्मोपशमाद्यनपेक्षः सहजो भावश्चेतनत्वादिः पारिणामिकः। तदेतत्सत्त्वं यथासंभवं भव्यस्याभवस्य वा जीवस्य तत्त्वं स्वरूपमिति सूत्रार्थः।

तदुक्तं स्वरूपसंबोधने—

ज्ञानाद्भिन्नो न[१३]चाभिन्नो भिन्नाभिन्नः कथं च न।
ज्ञानं पूर्वापरीभूतं सोऽयमात्मेति कीर्तितः। इति॥

ननु भेदाभेदयोः परस्परपरिहारेणावस्थानादन्यतरस्यैव वास्तवत्वादुभयात्मकत्वमयुक्तमिति चेत्तदयुक्तं[१४] बाधे प्रमाणाभावात्। अनुपलम्भो हि बाधकं प्रमाणं न सोऽस्ति समस्तेषु वस्तुष्वनेकै[१५]रसात्मकत्वस्य स्याद्वादिनो मते सुप्रसिद्धत्वादित्यलम्।

अपरे पुनर्जीवाजीवयोरपरं प्रपञ्चमाचक्षते जीवाकाशधर्माधर्मपुद्गलास्तिकायभेदात्। एतेषु पञ्चसु तत्त्वेषु कालत्रयसंबन्धितया स्थितिव्यपदेशोऽनेकप्रदेशत्वेन शरीवत्कायव्यपदेशः। तत्र जीवा द्विविधाः, संसारिणो मुक्ताश्च। भवाद्भवान्तरप्राप्तिमन्तः संसारिणः। ते च द्विविधाः,

---

* संसारप्राप्तिरूपे। घ. पु.।

---

१ ख. °वति°। २ च. क्षायिकौ। ३ ख. घ. °कः आर्हततत्त्वानुसंधानवशाद्रागादिपङ्कक्षालनेन निर्मलतापादकः क्षायिको भावः। यथा°। ४ ख. °पङ्कलुषान्तां°। ५ घ °ता। अनुदयप्राप्तिकर्मणोऽधक्ष°। ६ ख. °र्मणोपशमक्ष°। ७ च. °उत्पद्यमानो°। ८ ख. घ. °भावो मि°। ९ ङ. °क्षयिकः। १० च. °थापङ्कात्पृथग्भूतस्य निर्मलस्य स्फटिकादिभाजनान्तर्गतस्य जलस्य स्वच्छता। कर्मणः क्षयोपशमे सति जायमानो भा°। ११ ख. °स्यार्धे स्व°। १२ ख. °हजः श्वेतत्वादिपा°। १३ क. ग. नवाभि°। ख. घ. °ननाभिन्नो°। १४ ख. °क्तं बाधप्रमा°। १५ च. °नेकान्तात्म°। १६ ख. कात्म°। १७ घ. याऽस्तित्व°। च. °याऽस्तीतिस्य°। १८ च. °श्च। भावाद्भावा°।

समनस्का अमनस्काश्च । तत्र संज्ञिनः समनस्काः, शिक्षाक्रियालापग्रहणरूपा संज्ञा । तद्विधुरास्त्वमनस्काः । ते चामनस्का द्विविधाः, त्रसस्थावरभेदात्तत्र द्वीन्द्रियादयः शङ्खगण्डोलकप्रभृतयश्चतुर्विधास्त्रसाः पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः । तत्र मार्गगतधूलिः पृथिवी इष्टकादिः पृथिवीकायः पृथिवी कायत्वेन येन गृहीता स पृथिवीकायकः, पृथिवीं कायत्वेन यो ग्रहीष्यति स पृथिवीजीवः । एवमबादिष्वपि भेदचतुष्टयं योज्यम् । तत्र पृथिव्यादि कायत्वेन गृहीतवन्तो ग्रहीष्यन्तश्च स्थावरा गृह्यन्ते न पृथिव्यादिपृथिवीकायादयः, तेषां जीवत्वात् । ते च स्थावराः स्पर्शनैकेन्द्रियाश्च भवान्तरप्राप्तिविधुरा मुक्ताः, धर्माधर्माकाशास्तिकायास्त एकत्वशालिनो निष्क्रियाश्च द्रव्यस्य देशान्तरप्राप्तिहेतुः । तत्र धर्माधर्मौ प्रसिद्धौ, आलोकेनाविच्छिन्ने नभसि लोकाकाशपदवेदनीये सर्वत्रावस्थितिगतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः, अत एव धर्मास्तिकायः प्रवृत्त्यनुमेयः । अधर्मास्तिकायः स्थित्यनुमेयः । अन्यवस्तुप्रदेशमध्येऽन्यस्य वस्तुनः प्रवेशोऽवगाहः, तदाकाशकृत्यम् । स्पर्शरसवर्णवन्तः पुद्गलाः । ते च द्विविधा अणवः स्कन्धाश्च भोक्तुमशक्या अणवः । द्व्यणुकादयः स्कन्धाः । तत्र द्व्यणुकादिस्कन्धभेदादण्वादिरुत्पद्यते, अण्वादिसंघाताद्द्व्यणुकादिरुत्पद्यते, क्वचिद्भेदसंघाताभ्यां स्कन्धोत्पत्तिः । अत एव पूरयन्ति गलन्तीति पुद्गलाः । कालस्यानेकप्रदेशत्वाभावेनास्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति तल्लक्षणयोगात्तदुक्तं गुणपर्यायवद्द्रव्यमिति । द्रव्याश्रया निर्गुणा गुणाः । यथा जीवस्य ज्ञानत्वादिसामान्यरूपाः पुद्गलस्य रूपत्वादिसामान्यस्वभावाः । धर्माधर्माकाशकालानां यथासंभवं गतिस्थित्यवगाहहेतुत्वादिसामान्यानि गुणाः । तस्य द्रव्यस्योक्तरूपेण भवनमुत्पादः,

---

१ ख. °स्काः । भिक्षा° । २ घ. °रूपसं° । ३ ङ. °त्रयस्था° । च. °त्रस्तस्था° । ४ च. °स्तस्ताः पृ° । ५ क. ग. घ. °तेषामजी° । ख. °तेषां जीवादयस्तेषां जी° । च. तेषामनेकत्वा° । ६ च. °श्च । भावा° । ७ ग. °स्यप्रदे° । ८ क. ग. °प्तिहेतवः । त । ९ घ. हेतवः । त° । १० ख. °धर्मा धर्मास्तिकायः स्थित्यनुमेयः । अन्यधर्मास्तिकायः स्थित्यनुमेयः ।११ च. °शो विभागः । त° ।१२ ग. °वकाशः, त° । १३ ख. °ते क्व° । १४ क. °तात्तत्र द्व्यणुकादिस्कन्धभेदादण्वादि° । १५ ख. घ. °पूयन्ति° । १६ च. °न्तिप्रसन्ती° । १७ च. °दिधर्मस्वरू° । १८ घ. °पाः स्वभावाः । तथा पु° । १९ ख. ग. घ. °भावः । घ° । २० च. कालानां । २१ च. °गाहवर्तनाहेतुत्वसा° । २२ च. °स्योत्तरू° ।

तद्भावः परिणामः पर्याय इति पर्याया[1]ः। यथा जीवस्य घटादिज्ञानसुखक्लेशादयः पुद्गलस्य मृत्पिण्ड[2]घटादयः। धर्मादीनां गत्यादिविशेषाः। अत एव षड्द्रव्याणीति प्रसिद्धिः।

केचन सप्त तत्त्वानीति वर्णयन्ति, तदाह जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षास्तत्त्वानीति। तत्र जीवाजीवौ निरूपितौ। आस्रवो निरूप्यते–औदारिकादिकायादिचलनद्वारेणा[3]ऽऽत्मनश्चलनं योगपदवेदनीयमास्रवः। यथा सलिलावगाहि द्वारं[4] नद्यास्रव[5]णकारणत्वादास्रव इति निगद्यते, तथा योगप्रणाडिकया कर्माऽऽस्रवतीति स योग आस्रवः। यथाऽऽर्द्रं[6] वस्त्रं समन्ताद्वातानीतं रेणुजातमुपादत्ते तथा कषायजलार्द्र आत्मा योगानीतं कर्म सर्वप्रदेशैर्गृह्णाति। यथा वा निष्टप्तायःपिण्डे जले क्षिप्तेऽम्भः समन्ताद्गृह्णाति, तथा काषायोष्णो जीवो योगानीतं कर्म समन्तादादत्ते। कषति[7] हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः क्रोधो मानो माया लोभश्च, स द्विविधः शुभाशुभभेदात्। अत्राहिंसादिः शुभः काययोगः सत्यमितहितभाषणादिः शुभो वाग्योग[8]ः। तदेतदास्रवभेदप्रभेद[9]जातं कायवाङ्मनःकर्मयोगः स आस्रवः। शुभः पुण्यस्य[10], अशुभः पापस्येत्यादिना सूत्रसंदर्भेण[11] ससंरम्भमभा[12]णि। अपरे त्वेवं मेनिरे–आस्रवयति पुरु[13]षं विषयेष्विन्द्रियप्रवृत्तिरास्रवः। इन्द्रियद्वारा हि पौरुषं ज्योतिर्विषयान्स्पृशद्रूपादिज्ञानरूपेण परिणमत इति।

मिथ्यादर्शनाविरतिप्रमाद[14]कषायवशाद्योगवशाच्चाऽऽत्मा सूक्ष्मैकक्षेत्रावगाहि[15]नामनन्त[16]प्रदेशानां पुद्गलानां कर्मबन्धयोग्यानामादानमुपश्लेषणं यत्करोति स बन्धः। तदुक्तं सकषायत्वाज्जीवः कर्मभावयोग्यान्पुद्गलानादत्ते स ब[17]न्ध इति। तत्र कषायग्रहणं सर्वबन्धहेतूपलक्षणार्थम्। बन्ध[18]हेतूनपपाठ वाचकाचार्यः–मिथ्यादर्शनाविरतिप्रमादकषाया बन्धहेतव इति। मिथ्यादर्शनं द्विविधं मिथ्याकर्मोदयात्परोपदेशानपेक्षं

---

१ घ. °र्यायार्थः। य°। २ च. °त्पिण्डाद°। ३ क. णात्मनश्चलनद्वारेणाऽऽत्म°। ४ क. ग. °रं जलाद्या°। ५ च. °वणं कां°। ख. °ति संयो°। ६ ग. °थानि°। ७ घ. कर्षति। ८ च. °गः। अर्हत्सिद्धाचार्योपाध्यायसाधुनामधेयपञ्चपरमेष्ठिभक्तितपोरुचिश्रुतविननयादिः शुभो मनोयोगः। एतद्विपरीतस्त्वशुभः। त्रिविधो योगस्तदे°। ९ ख. °दजा°। १० च. °स्यपा°। ११ क. °ण सं°। १२ ग. °म माभा°। १३ ग. °षरु। १४ घ. °दविक्षेपवावि°। १५ घ. हिनां भवान्तरप्र°। १६ क. °नन्ततत्प्रदे°। ङ. °नन्तान्त°। च. °नन्तानन्त°। १७ ग. °बद्ध°। १८ च. °न्धनार्थ प°।

तत्त्वार्थश्रद्धानं नैसर्गिकमेकम्, अपरं परोपदेशजम् । पृथिव्यादिषट्का-पादानकं षडिन्द्रियासंयमनं चाविरतिः । पञ्चसमितित्रिगुप्तिष्वनुत्साहः प्रमादः । कषायः क्रोधादिः । तत्र कषायान्ताः स्थित्यनुभावब-न्धहेतवः प्रकृतिप्रदेशबन्धहेतुर्योग इति विभागः । बन्धश्चतुर्विध इत्युक्तं प्रकृतिस्थित्यनुभावप्रदेशास्तु तद्विधय इति, यथा निम्बगु-डादेस्तिक्तत्वमधुरत्वादिस्वभावः । एवमावरणीयस्य ज्ञानदर्शनाव-रणत्वमादित्यप्रभोच्छादकाम्भोधरवत्प्रदीपप्रभातिरोधायककुम्भवच्च सद्-सद्वेदनीयस्य सुखदुःखोत्पादकत्वमसिधारामधुलेहनवद्दर्शनमोहनीयस्य तत्त्वार्थाश्रद्धानकारित्वं दुर्जनसङ्गवच्चारित्रे मोहनीयस्यासंयमहेतुत्वं मद्यमदवदायुषो देहबन्धकर्तृत्वं जलवन्नाम्नो विचित्रनामकारित्वं चित्रि-कवद्गोत्रस्योच्चनीचकारित्वं कुम्भकारवद्दानादीनां विघ्ननिदानत्वमन्त-रायस्य स्वभावः कोशाध्यक्षवत् । सोऽयं प्रकृतिबन्धोऽष्टविधो द्रव्यकर्मावान्तरभेदमूलप्रकृतिवेदनीयः । तथाऽवोचदुमास्वातिवाचका-चार्यः—आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तराया इति । तद्भेदं च समगृह्णात्पञ्चनवाष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चद-शभेदा यथाक्रममिति । एतच्च सर्वं विद्यानन्दादिभिर्विवृतमिति विस्तर-भयान्न प्रस्तूयते । यथाऽजागोमहिष्यादिक्षीराणामेतावन्तमनेहसं माधुर्यस्वभावादप्रच्युतिस्थितिः । तथा ज्ञानावरणादीनां मूलप्रकृती-नामादितास्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटिकोट्यः परा स्थितिरित्याद्युक्तं काल*दुर्धानवत्स्वीयस्वभावादप्रच्युतिस्थितिः । यथाऽ-जागोमहिष्यादिक्षीराणां तीव्रमन्दादिभावेन स्वकार्यकारणे सामर्थ्य-

* दुरुद्धरागमस्वभावात् । घ. पु. टि. ।

१ च. °त्वार्थाश्र° । २ घ. °षट्कोपा° । ३ क. °सामात्रगु° । (समिति त्रिगुप्ति? ) । ख. घ. °संविद्गुप्ति° । ४ च. °तित्रिगुप्तिप्रभृतिष्व° । ५ घ. नभव° । ६ घ. °गः । स ब° । ७ ग. °द्विषय° । ८ च. °दित्याच्छाप्रभोच्छा । ९ ख. ध. °मातिरोघायका° । १० ग °रप्रदी° । ११ च. °स्य तत्त्वा । र्थश्र° । १२ च. °रित्रमो° । १३ ग. °मनहे° । १४ ग. °मदव° । १५ ख. °र्तृत्वज ल्त्वात् । जिनाम्नो° । १६ क. °वतिनाम्नो° । १७ ङ. चित्रक° । १८ ग. °यस्व° । १९ ग. °र्मान्त° । २० च. °तिपदवे° । २१ ( उमास्वामिवाचकाचार्यः । ) २२ ग. °ज्ञानं द° । २३ क. ख. °रणं वे° । २४ ख. °समागृ° । २५ ख. °दशा भे° । २६ ख. °र्भिनिवृत्तमि° । २७ ख. थाऽजगो° । २८ घ. °धुर्य साधुर्य° । २९ घ. °रित्युक्तं । ३० ग. °कालादुर्दान्त व° । ३१ ख. °र्धानंरचेवंगमस्व° । च.° र्धावगमः । स्वी° । ३२ क. °व स्वीय° । घ. °वस्वैगमस्व° । ३३ क. घ. °तिपरास्थि° ३४ क. ग. °णां तावादिष्यते ती° । ३५ क. ख. ग. घ. °र्यकर° ।

विशेषोऽनुभावः । तथा कर्मपुद्गलानां स्वकार्यकरणे सामर्थ्यविशेषोऽनुभावः । कर्मभावपरिणतपुद्गलस्कन्धानामनन्तान्तप्रदेशानाम्, आत्मप्रदेशानुप्रवेशः प्रदेशबन्धः । आस्रवनिरोधः संवरः । येनाऽऽत्मनि प्रविशत्कर्म प्रतिषिध्यते स गुप्तिसमित्यादिः संवरः । संचारकारणाद्योगादात्मनो गोपनं गुप्तिः । सा त्रिविधा, कायवाङ्मनोनिग्रहभेदात् । प्राणिपीडापरिहारेण सम्यगयनं समितिः । सेर्ष्याभाषादिभेदात्पञ्चधा । प्रपञ्चितं च हेमचन्द्राचार्यैः-

लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः ।
जन्तुरक्षार्थमालोक्य गतिरीर्ष्या[10] मता सताम् ॥
आपद्यतांगतः[13] सर्वजनीनं मितभाषणम् ।
प्रिया वाचंयमानां सा भाषासमितिरुच्यते ॥
*द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् ।
मुनिर्यदन्नमादत्ते सैषणासमितिर्मता ॥
आसनादीनि संवीक्ष्य प्रतिलङ्घ्य च यत्नतः ।
गृह्णीयान्निक्षिपेद्ध्यायेत्[15]साऽऽदानसमितिः स्मृता ॥
कफमूत्रमलप्रायैर्निर्जन्तुजगतीतले ।
यत्नाद्यदुत्सृजेत्साधुः[17] सोत्सर्गसमितिर्भवेत् ॥

अत एवाऽऽस्रवः स्रोतसो द्वारं संवृणोतीति संवर इति निराहुः । तदुक्तमभियुक्तैः-

आस्रवो भवहेतुः स्यात्संवरो मोह[18]कारणम् ।
इतीयमार्हती[19] मुष्टिरन्यदस्याः प्रपञ्चनम्[20] ॥

अर्जितस्य कर्मणस्तपःप्रभृतिभिर्निर्जरणं निर्जराख्यं तत्त्वं चिरकालप्रवृत्तकषायकलापं पुण्यं सुखदुःखे च देहेन जरयति नाशयति[21]

---

* द्विचत्वारिंशत्संख्यायुक्ताआसमन्ताद्भिक्षादोषास्तैरित्यर्थः । घ. पु. टि.

---

१ ख. घ. °शेषानु° । २ ख. ग. घ. °नुभवः । ३ क. ख. घ. °शेषानु° । ४ ख. ग. घ. नुभवः । ५ ख. °शानुभवे° । ६ च. °नुबन्धः । प्र° । ७ क. ख. ग. च. संसार° । ८ च. °तिः । सा संसारस्ये । र्या° । ९ ग. °भास्करांशु° । १० क. ख. घ. रीर्यामि° । ११ घ. °म् । अपद्यतागतासार्व° । १२ क. °गतास° । १३ घ. °नीनामितमत्यणा । प्रि° । १४ ख. °प्रविलं° । १५ क. ग. घ. पे ध्यायन्सा° । १६ च. °ता । निजमू° । १७ ग. साध्वः सो° । १८ ग. च. मोक्षका° । १९ च. °ती दृष्टि° । २० क. ख. घ. म् । आर्जि° । २१ ग. ति । इति के ।

केशोल्लुञ्च[1]नादिकं तप उच्यते । सा निर्जरा द्विविधा, यथा कालौ[2]पक्रमिकभेदात् । तत्र प्रथमा यस्मिन्काले यत्कर्म फलप्रदत्वेनाभिमतं तस्मिन्नेव काले फलदानाद्भवन्ती निर्जरा कामादिपाकजेति च जेगीयते । यत्कर्म तपोबलात्स्वकामनयोदयावलिं प्रवेश्य प्रपद्यते तत्क[3]र्म निर्जरा[4] । यदाह—

संसारबीजभूतानां कर्मणां जरणादिह ।
निर्जरा सं[5]मता द्वेधा सकामा कामनिर्जरा ॥
स्मृता सकामा यमिनामकामा त्वन्यदेहिनाम् ॥ इति ।

मिथ्यादर्शनादीनां बन्धहेतूनां निरोधः, अभिनवकर्माभा[6]वात् । निर्जराहेतुसं[7]निधानेनार्जितस्य कर्मणो निरसनादात्यन्तिककर्ममोक्षण मोक्षः[8], बन्धहेतुभवहेतुनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्ष इति तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात्यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिंस्तं[9][10]द्बलादेवाऽऽसंस्कारक्षयं भ्रमति, तथा भवस्थेनाऽऽत्मनाऽपवर्गप्राप्तये बहुशो यत्कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यते, यथा[11] वा मृत्तिकालेपकृतं[12]मलाबुद्रव्यं जलेऽधः पतति, पुनरपेतमृत्तिकाबन्धमूर्ध्वं गच्छति तथा कर्मरहित आत्मा, असङ्गत्वादूर्ध्वं गच्छति बन्ध[13]च्छेदादेरण्डबीजवच्चोर्ध्वं गति[15]स्वभावाच्चाग्निशिखावत् । अन्यो[14]न्यं प्रदेशानुप्रवेशे सत्यविभागेनावस्थानं बन्धः । परस्परप्राप्तिमात्रं सङ्गः[16] । तदुक्तं पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथा गतिपरिणामाच्चाविरु[17]द्धं कुलालचक्रवद्व्यपगतलेपालाबुवदेरण्डबीजवदग्निशिखावच्चेति । अत एव पठन्ति—

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते[18] त्वालोकाकाशमागताः ॥ इति ।

अन्ये तु गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्याऽऽत्मन उपरिदेशावस्थानं मुक्तिरित्यास्थिषत । एवमुक्तानि सुखदुःखसाध-

---

१ घ. °लुञ्छना° । २ क. ख. घ °वतिनि° । ३ घ. °त्कर्मोपक्रमनि° । ४ च. °रा द्वितीया । य° । ५ क. ख. ग. घ. ङ. संस्मृता । ६ क. ख. ग. भारात् । ७ ग. °संधा° । ८ च. °क्षः ; तदाह । बन्धहेत्वभावनि° । ९ ग. °स्त अ° । १० ग. °स्तद्वशादे° । ११ ग. °था मृ° । १२ च. °तगौरवम° । १३ ख. °न्ध दण्डादे° । १४ घ. °न्योन्यप्र° । १५ च. °नं प° । १६ च. सङ्गतं त° । १७ घ. °रुद्धाकु° । १८ क. ख. ग. घ. °न्ते त्वलो° ।

नाभ्यां पुण्यपापाभ्यां सहितानि नव पदार्थान्केचनाङ्गी चक्रुः । तदुक्तं सिद्धान्ते, जीवाजीवौ पुण्यपापै[1]र्युता[2]वास्रवः संवरो निर्जरणं बन्धो मोक्षश्च नव तत्त्वानीति । संग्रहे प्रवृत्ता वयमु[3]परताः स्मः[4] ।

अत्र सर्वत्र सप्तभङ्गिनयाख्यं[5] न्यायमवतारयन्ति जैनाः । स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्ति चावक्तव्य इति । तत्सर्वमनन्तवीर्यः प्रत्य[6]पीपदत्—

तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्या[7]वाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥
समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते ॥ इति ।

स्याच्छब्दः खल्वयं निपातः, तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः । यथोक्तम्—

वाक्येष्वनेकान्तद्योतिगम्यं प्रति विशेषणम् ।
स्यान्निपातो[8]ऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥ इति ।

यदि[9] पुन[10]रेकान्तद्योतकः स्याच्छब्दो[11]ऽयं स्यात्तदा[12] स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात्, अनेकान्तद्योतकत्वे तु स्यादस्ति कथंचि[13]दस्तीति स्यात्पदा[14]त्कथंचिदित्ययमर्थो लभ्यत इति नाऽऽनर्थक्यम् । तदाह—

स्याद्वादः सर्वथैकान्तत्यागात्किं वृत्त[15]तद्[16]विधेः ।
सप्तभङ्गिनयापेक्षो हेया[17]देयविशेषकृत् ॥ इति ।

---

१ ख. °पापास्र° । २ घ. °पतावा° । ३ च. वयं विस्तरभयादुप° । ४ क. ख. ग. च. स्मः । ५ च °यार्थ न्या° । ६ च. पर्यपीपदत् । ७ क. ख. घ. अन्यावा° । ८ क. ख. °पातेऽर्थ° । ग. घ. °पातार्थ° । ९ घ. °दि अभिमतस्त्वेकान्तवादः सर्वथा । १० क. ख. ग. °नरनेका° । ११ क. ख. ग. घ. °ब्दो न स्या° । १२ घ. °दादयम° । १३ क. ख. ग. °चि दस्तीति अ° । १४ मळपु° । १५ ङ. वृततदि° । १६ क. ग. °तद्विधे । स° । च. ताद्वितौ । स° । १७ ग. °याहेय° ।

यदि वस्त्वस्त्येकान्ततः सर्वथा सर्वदा सर्वत्र सर्वात्मनाऽस्तीति न उपादित्साजिहासाभ्यां क्वचित्कदाचित्केनचित्प्रवर्तेत निवर्तेत वा प्राप्ताप्रा-पणीयत्वेहेयहानानुपपत्तेश्च । अनेकान्तपक्षे तु कथंचित्क्वचित्केनचित्सत्त्वेन हानोपादाने प्रेक्षावतामुपपद्येते । किं च वस्तुनः सत्त्वं स्वभावः, असत्त्वं वेत्यादि प्रष्टव्यं न तावदस्तित्वं वस्तुनः स्वभाव इति * समस्ति घटोऽस्तीत्यनयोः पर्यायतया युगपत्प्रयोगायोगान्नास्तीति प्रयोगविरो-धाच्च । एवमन्यत्रापि योज्यम् । यथोक्तम्—

घटोऽस्तीति न वक्तव्यं सन्नेव हि यतो घटः ।
नास्तीत्यपि न वक्तव्यं विरोधात्सदसत्त्वयोः ॥ इत्यादि ।

तस्मादित्थं वक्तव्यं सदसत्सदसदनिर्वचनीयवादभेदेन प्रतिवादिन-श्चतुर्विधाः । पुनरप्यनिर्वचनीयमतेनामिश्रितानि सदसदादिमतानीति त्रिविधाः । तान्प्रति किं वस्त्वस्तीत्यादिपर्यनुयोगे कथंचिदस्तीत्यादि-प्रतिवचनसंभवेन ते वादिनः सर्वे निर्विण्णाः सन्तस्तूष्णीमासत इति संपूर्णार्थविनिश्चायिनः स्याद्वादमङ्गीकुर्वतस्तत्र तत्र विजय इति सर्वमु-पपन्नम् । यदवोचदाचार्यः स्याद्वादमञ्जर्याम्—

अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम् ।
एकदेशविशिष्टोऽर्थो न यस्य विषयो मतः ॥
न्यायानामेकनिष्ठानां प्रवृत्तौ श्रुतवर्त्मनि ।
संपूर्णार्थविनिश्चायि स्याद्वस्तु श्रुतमुच्यते ॥ इति ।

अन्योन्यपक्षप्रतिपक्षभावा-
द्यथा परे मत्सरिणः प्रवादाः ॥
नयानशेषानविशेषमिच्छन्
न पक्षपाती समयस्तथा+ऽऽर्हतः ॥ इति च ।

जिनदत्तसूरिणा जैनं मतमित्थमुक्तम्—

बलभोगोपभोगानामुभयोर्दानलाभयोः ।
अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम् ।

---

* संभवतीत्यर्थकम् । घ. पु. टि. । + स्याद्वादमञ्जर्या 'तथा ते' इति पाठः ।

---

१ घ. °पादानजि° । २ क. ख. ग. घ. °यत्वात् हे° । ३ च. °यभाना° । ४ घ. °वित्सत्वे° । ५ क. ख. ग. घ. नीयं वा पद° । ६ ग. °न वा प्र° । ७ ख. ग. घ. च. °तेनमि° । ८ च. विषण्णाः सन्तीति तु° । ९ ख. च. °शिष्टार्थो । १० च. °नलो भ° । ११ क. ख. °द्राभिर° । घ. °द्रातमोऽज्ञानजु° ।

हिंसा रत्यरती रागद्वेषौ रतिरतिस्मरः ।
शोको मिथ्यात्वमेतेऽष्टादश दोषा न यस्य सः ।
जिनो देवो गुरुः सम्यक्तत्त्वज्ञानोपदेशकः[3] ।
ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्तिनि ।
स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमाऽपि च ।
नित्यानित्यात्मकं सर्वं नव तत्त्वानि सप्त वा ।
जीवाजीवौ पुण्यपापे चाऽऽस्रवः संवरोऽपि च ।
बन्धो निर्जरणं मुक्तिरेषां व्याख्याऽधुनोच्यते ।
चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः ।
सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्ययः ॥
आस्रवः कर्मणां बन्धो निर्जरस्तद्वियोजनम् ।
अष्टकर्मक्षयान्मोक्षोऽथान्तर्भावश्च कैश्चन ।
पुण्यस्य संस्रवे पापस्याऽऽस्रवे क्रियते पुनः ॥
लब्धानन्तचतुष्कस्य लोकागूढस्य चाऽऽत्मनः ।
क्षीणाष्टकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता ॥
* सरजोहरणा भैक्षभुजो लुञ्चितमूर्धजाः ।
+ श्वेताम्बराः क्षमाशीला निःसङ्गा जैनसाधवः ॥
लुञ्चिताः [10]पिच्छिकाहस्ताः पाणिपात्रा दिगम्बराः ।
ऊर्ध्वाशिनो गृहे दातुर्द्वितीयाः स्युर्जिनर्षयः ॥
भुङ्क्ते न केवलं न स्त्रीं मोक्षमेति दिगम्बरः ।
प्राहुरेषामयं भेदो महाञ्श्वेताम्बरैः सह ॥ इति ।

इति सर्वदर्शनसंग्रह आर्हतदर्शनम् ।

---

## अथ रामानुजदर्शनम् ॥ ४ ॥

---

तदेतदार्हतमतं प्रामाणिकगर्हणमर्हति न ह्येकस्मिन्वस्तुनि परमार्थे

---

* हरणायोग्याः सरजा मलिनवस्त्रा इत्यर्थः । + घ. पु. । गैरिकादिना रञ्जनीवर्जिता इत्यर्थः । घ. पु. ।

---

१ घ. जीनो । २ क. ख.ग. गुरुं । ३ क. ख. ग. °शकम् । °ज्ञा । ४ घ. °पापावास्र° । ५ घ. द्गलः पु° । ६ घ.आस्नावः । ७ ग. °जरातद्वि° । ८ ग. लोकगू° । ९ ख. णास्तकर्मणामु° । १० ग. पिञ्छिका° ।

सति परमार्थसतां[1] युगपत्सदसत्त्वादिधर्माणां समावेशः संभवति। न च
सदसत्त्वयोः परस्परविरुद्धयोः समुच्चयासंभवे विकल्पः किं न स्यादिति
वदितव्यं[2] क्रिया हि विकल्प्यते न वस्त्विति न्यायात्। न चानेकान्तं
जगत्सर्वं हेरम्बनरसिंहवदिति दृष्टान्तावष्टम्भवशादेष्टव्यम्। एकस्मिन्देशे
गजत्वं सिंहत्वं वाऽपरस्मिन्नरत्वमिति देशभेदेन विरोधाभावेन तस्यै-
कस्मिन्देश एव सत्त्वासत्त्वादिना[3]ऽनेकान्तत्वाभिधाने दृष्टान्तानुपपत्तेः[4]।
ननु द्रव्यात्मना सत्त्वं * पर्यायात्मना तदभाव इत्युभयमप्युपपन्नमिति
चेन्मैवं, कालभेदेन हि कस्यचित्सत्त्वमसत्त्वं च स्वभाव इति न कश्चि-
द्दोषः। न चैकस्य ह्रस्वत्वदीर्घत्ववदनेकान्तत्वं जगतः स्यादिति वाच्यं
+ प्रतियोगिभेदेन विरोधाभावात्। तस्मात्प्रमाणाभावाद्युगपत्सत्त्वासत्त्वे
परस्परविरुद्धे नैकस्मिन्वस्तुनि[5] वस्तुं युक्ते। एवमन्यासामपि भङ्गीनां
भङ्गोऽवगन्तव्यः। किं च सर्वस्यास्य मूलभूतः सप्तभङ्गिनयः स्वयमेका-
न्तोऽनेकान्तो वा, आद्ये सर्वमनेकान्तमिति प्रतिज्ञाव्याघातः। द्वितीये
विवक्षितार्थासिद्धिः। अनेकान्तत्वेनासाधकत्वात्। तथा चेयमुभयतः-
पाशा रज्जुः स्याद्वादिनः स्यात्। अपि च नवत्वसप्तत्वादिनिर्धारणस्य
फलस्य तन्निर्धारयितुः प्रमातुश्च तत्करणस्य[6] प्रमाणस्य[7] नवत्वादेरनियमे
साधु समर्थितमात्मनस्तीर्थकरत्वं देवानांप्रियेणाऽऽर्हतमतप्रवर्तकेन।
तथा जीवस्य देहानुरूपपरिमाणत्वाङ्गीकारे[8][9] योगबलादनेकपरिग्राहकयो-[10]
गिजीवेषु[11] प्रतिशरीरं जीवविच्छेदः प्रसज्येत[12], मनुजशरीरपरिमाणो जीवो
मतङ्गजदेहं कृत्स्नं प्रवेष्टुं न प्रभवेत्। किं च गजादिशरीरं परित्यज्य
पिपीलिकाशरीरं विशतः प्राचीनशरीरसंनिवेशविनाशोऽपि प्राप्नुयात्।
न च यथा प्रदीपप्रभाविशेषः[13] + प्रपाप्रासादाद्युदरवर्तिसंकोचविकाशवां-
स्तथा जीवोऽपि मनुजमतङ्गजादिशरीरेषु स्यादित्येषितव्यं, प्रदीपवदेव
सविकारत्वेनानित्यत्वप्राप्तौ[14] कृतप्रणाशाकृताभ्यागमप्रसङ्गात्। एवं प्रधा-

---

* परिगत आत्मा पर्यात्मा अनुयोग्यात्मना तदभावइत्यर्थः॥ घ. पु.। + निरूपकभेदेन घ. पु.

+ प्रपापानीयशालिकेत्यमरः॥

---

१ ख. °तां सदसत्त्वादिधर्माणां यु°। २ ग. वक्तव्यं। च. विदितव्यम्। ३ ग. °त्वादि°। ४ च. °ष्टान्तत्वानु°। ५ क. °स्मिन्वस्तुं°। ६ ख. तत्कार°। च. तत्कारणस्य प्रमातुश्च तत्कार° णस्य प्रमा°। ७ ख. घ. °स्य तद्विषयस्य प्र°। च. °स्य तत्प्रमे°। ८ च. रूपस्य। ९ ख. °माणाङ्गी°। १० ख. °क देहप्रा°। ग. घ. °क. देहप°। ११ च. °गिशरीरेषु। १२ घ. प्रसज्जेत्। १३ ख. °षः प्रा°। १४ च. सर्ववि°।

नमल्लनिबर्हणन्यायेन जीवपदा[1]र्थदूषणाभिधानदिशाऽन्यत्रापि दूषणमुत्प्रेक्षणीयम् । तस्मान्नित्यनिर्दोषश्रुतिविरुद्धत्वादिदमुपादेयं न भवति । तदुक्तं भगवता व्यासेन–नैकस्मिन्नसंभवादिति । रामानुजेन च जैनमतनिराकरणपरत्वेन[2] तदिदं सूत्रं व्याकारि । एष हि तस्य सिद्धान्तः–चिदचिदीश्वरभेदेन भोक्तृभोग्यनियामकभेदेन[3] व्यवस्थितास्त्रयः पदार्था इति । तदुक्तम्–

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित्पुनः ॥ इति ।

अपरे पुनरशेष[4]विशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थः । तच्च नित्यशुद्धबुद्धमुक्तस्वभावमपि तत्त्वमस्यादिसामानाधिकरण्या[5]धिगतजीवैक्यं बध्यते[6] मुच्यते च । तदतिरिक्तनानाविधमोक्तृ[7]भोक्तव्यादिभेदप्रपञ्चः सर्वोऽपि तस्मिन्नविद्यया परिकल्पितः सदेव सोम्येदमग्र आसीदेकमेवाद्वि[8]तीयमित्यादिवचननिचयप्रामाण्यादिति ब्रुवाणास्तरति शोकमात्मविदित्यादि[9]श्रुतिशिरःशतवशेन निर्विशेषब्रह्मात्मैकत्वविद्यया[10]ऽनाद्यविद्यानिवृत्तिमङ्गीकुर्वाणा मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति भेदनिन्दाश्रवणेन पारमार्थिकं भेदं निराचक्षाणा विचक्षणंमन्यास्तमिमं विभागं न सहन्ते । तत्रायं समाधिरभिधीयते भवेदेतदेवं यद्यविद्यायां प्रमाणं विद्येत, न[11] चैवमनादिभावरूपं ज्ञाननिवर्त्यमज्ञानं[12]महम[13]ज्ञो मामन्यच्च न जानामीति प्रत्यक्षप्रमाणसिद्धम् ।

तदुक्तम्–

अनादिभावरूपं यद्विज्ञानेन विलीयते ।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते ॥ इति ।

न चैतज्ज्ञानाभावविषयमित्याशङ्क[14]नीयं, को हि[15] कं ब्रूयात्[16]प्रभाकरकरावलम्बी भट्टदत्तहस्तो वा नाऽऽद्यः–

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किंचित्कैश्चिद्रूपं कदाचन ॥ इति ।

---

१ क. ग. घ. °दार्थे दू° । २ ख. त्वेनेदं । ३ ग. °न च व्य° । ४ क. ख. घ. °षप्र° । ५ ख. °ण्याग° । च. °ण्यावग° । ६ घ. बुध्यते । ७ ग. °क्तृभोग्यादि° । ८ च. °तीयं ब्रह्मेत्या° । ९ च. °दिश्रुति° १० ग.विषया । ११ ग. नन्विदम° । १२ ग. °नमज्ञो । १३ मन्योऽहम° । १४ क. ख. ग.घ. ङ. °नीयं च न । १५ ख. हि कमेवं ब्रू° । घ. हि एवं ब्रू° । १६ क. ख. ग. घ. प्राभाकर° ।

भावान्तरमभावो हि कयाचित्तु व्यपेक्षया ।
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ॥

इति वदता भावव्यतिरिक्तस्याभावस्यानभ्युपगमात्[1] । अभावस्य षष्ठप्रमाणगोचरत्वेन ज्ञानस्य नित्यानुमेयत्वेन[2] च तदभावस्य प्रत्यक्षविषयत्वानुपपत्तेः । यदि पुनः प्रत्यक्षाभाववादी कश्चिदेवमाचक्षीत तं[3] प्रत्याचक्षीत,| अहमज्ञ इत्यस्मिन्ननुभवेऽहमित्यात्मनोऽभावधर्मितया[4] ज्ञानस्य प्रतियोगितया चावगतिरस्ति[6] न वा, अस्ति चेद्विरोधादेवं न ज्ञानाभावानुवसंभवः । न चेद्धर्मिप्रतियोगिज्ञानसोपक्षो ज्ञानाभावानु[7]भवः सुतरां न संभवति तस्याज्ञानस्य भावरूपत्वे प्रागुक्तदूषणाभावादयमनुभवो भावरूपाज्ञानगोचर एवाभ्युपगन्तव्य इति । तदेतद्गगनरोमन्थायितं[8] भावरूपस्याज्ञानस्य ज्ञानाभावसमानयोगक्षेमत्वात्[9] । तथा हि विषयत्वेनाऽऽश्रयत्वेन च ज्ञानस्य[10] व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो न वा प्रतिपन्नश्चेत्स्वरूपज्ञाननिवर्त्यं[11] यदज्ञानमिति तस्मिन्प्रतिपन्ने कथंकारमवतिष्ठते, अप्रतिपन्नश्चेद्व्यावर्तकाश्रयविषय[12]शून्यमज्ञानं[14] कथमनुभूयेत[13] । अथ विशदः स्वरूपावभास[16] एवाज्ञानविरोधिना ज्ञानेना[17]ऽऽभा[15]सित इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति हन्त तर्हि ज्ञानभावे[18]ऽपि समानमेतत् । *अन्यत्राभिनिवेशात् । तस्मादुभयाभ्युपगतज्ञानाभाव एवाहमज्ञो मामन्यं[19] च[20] न[21] जानामीत्यनुभवगोचर इत्यभ्युपगन्तव्यम् । अस्तु तर्ह्यनुमानं विवादास्पदं प्रमाणज्ञानं स्वप्रागभाव[22]व्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं प्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति तदपि न क्षोदक्षमम् । अज्ञानेऽप्यनभिमताज्ञानान्तरसाधने[23]ऽपसिद्धान्तापातात् + तदसा-

* विशदस्वरूपावभासस्याज्ञानविरोधित्वं नाविशदस्वरूपावभासस्येतिचेज्ज्ञानाभावेऽपि विशदस्वरूपावभास एव विरोधीनाविशदस्वरूपावभास इति तुल्यमतो भावरूपाज्ञानस्य ज्ञानाभावसमानयोगक्षेमत्वं तर्हि वादिप्रतिवादिनोरैकमत्ये क्व विरोध इति चेदन्यत्राज्ञानपदार्थत्वेनाभिमतयोर्भावरूपत्वाभावरूपत्वयोरनैकमत्यात्प्रह्लादितरांशतौल्येऽपि न वादविच्छित्तिरिति भावः । घ. पु. टि. ।

+ तस्मिन्नज्ञानविषयकप्रमाणज्ञाने साध्यस्यासाधने ॥ घ पु टि. ।

१ ख. °स्यानुप° । २ घ. च. °त् । न द्वितीयः । अ° । ३ ख. °न त° । ४ ख. °धर्मत्वेन ज्ञा° । ५ ख. °व ज्ञा° । ६ च. °चेत्थं तत्प्रति° । ७ च. ज्ञानभा° । ८ च. °गनोमथितं । ९ च. भावेन स° । १० च. °नस्याव्या° । ११ क. ख. ग. घ. ङ. च. °र्त्यं तद° । १२ च. °यज्ञानं । १३ ख. °भूयते । आ । १४ ख. ग. °नेन भा° । घ. °नेन सहभासत । १५ ख. °भासत° । १६ क. °पि ज्ञा° । १७ ख. °तिचेत् ह° । १८ क. ख. ग. घ. ङ °ज्ञानाभा° । १९ ग. °च जा° । २० च. तर्हि तत्रानु° । २१ घ. । च. °नं मा नं वि° । २२ ख.भावाति° । २३ ख. °नेऽसि° ।

धनेऽनैकान्तिकत्वाद्दृष्टान्तस्य साधनविकलत्वाच्च, न हि प्रदीपप्रभाया अप्रकाशितार्थप्रकाशकत्वं संभवति ज्ञानस्यैव प्रकाशकत्वात् । सत्यपि प्रदीपे ज्ञानेन विषयप्रकाशसंभवात्प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानं समुत्पादयतो विरोधिसंतमसनिरसनद्वारेणोपकारकत्वमात्रमेवेत्यलमातिविस्तरेण ।

प्रतिप्रयोगश्च विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रितम् । अज्ञानत्वाच्छुक्तिकाद्यज्ञानवदिति । ननु शुक्तिकाद्यज्ञानस्याऽऽश्रयस्य प्रत्यगर्थस्य ज्ञानमात्रस्वभावत्वमेवेति चेन्मैवं शङ्किष्ठाः । अनुभूतिर्हि स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुणत्वापादकस्वभावाज्ञानावगतिसंगतिविदाद्यपरनामा सकर्मकानुभवितुरात्मत्वं ज्ञानत्वमित्याश्रयणात् । ननु ज्ञानरूपस्याऽऽत्मनः कथं ज्ञानगुणकत्वमिति चेत्तदसारं यदा हि मणिद्युमणिप्रभृति तेजोद्रव्यं प्रभावद्रूपेणावतिष्ठमानं प्रभारूपगुणाश्रयः । स्वाश्रयादन्यत्रापि वर्तमानत्वेन रूपत्वेन च प्रभा द्रव्यरूपाऽपि तच्छेषत्वनिबन्धनगुणव्यवहारा एवमयमात्मा स्वप्रकाशचिद्रूप एव चैतन्यगुणः । तथा च श्रुतिः—“स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव” (बृ०-४।५।१३) “अत्रायं पुरुषः स्वयं ज्योतिर्भवति” (बृ०४।३।९) “न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ।” (बृ०४।३।३०) “अथ यो वेदेदं जिघ्राणीति स आत्मा” (छा०८।१२।४) “योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः” (बृ० ४।३।७) एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः” (प्र०४।९) इत्यादिका न च “अनृतेन हि प्रत्यूढाः” (छा०८।३।२) इति श्रुतिरविद्यायां प्रमाणमित्याश्रयितुं शक्यमृतेतरविषयो ह्यनृतशब्दः, ऋतशब्दश्च

१ घ. °शत्वा° । २ ख. निरासद्वा° । ३ ख. °त्वमेवे° । ग. °त्व मात्रमित्य° । च. °तिप्रपञ्चेन । प्र° । ४ क. °तियो° । ५ च. °ह्याश्रयम् । अ° । ६ ख. °वमे° । ७ क. ग. °भावो०ज्ञा° । ८ ख. घ. °तिसंवि° । ९ ख. ग. च. °मंकोनु° । घ. °कर्मिका° । १० घ. °त्मत्वमात्मवृत्तिगुणविशेषस्य ज्ञा° । ११ ख. °चेद° । १२ ग. यथा । १३ क. ग. °हिमम° । १४ ख. °वरूपे° । १५ च. नंरू° । १६ क. ख. घ. °श्रयं स्वा° । १७ ग. °न्घगु° । १८ च. दिना श्रुतिरविद्याय। श्रुतिः प्रमाण° । १९ ग. °योऽनृ° । २० ख. °ब्दश्चक° ।

कर्मवचनः, ऋतं पिबन्ताविति वचनादृतं कर्मफलाभिसंधिरहितं परमपुरुषाराधनैनैव[1] तत्प्राप्ति[2]फलम् । अत्र तद्व्यतिरिक्तं सांसारिकाल्पफलं[3] कर्मानृतं ब्रह्मप्राप्तिविरोधि य एतं ब्रह्मलोकं न विदन्ति[4] अनृतेन[5] हि प्रत्यूढा इति वचनात् । मायां तु प्रकृतिं विद्यादित्यादौ मायाशब्दो विचित्रार्थ[6]सर्गकत्रिगुणात्मकप्रकृत्यभिधायको नानिर्वचनीयाज्ञानवचनः ॥

तेन मायासहस्रं तच्छवरस्या[7]ऽऽशुगामिना ।
बालस्य रक्षता देहमेकैकश्येन[8] सूदितम् ॥

इत्यादौ विचित्रार्थसर्गसमर्थस्य पारमार्थिकस्यैवा[9]सुराद्यस्त्रविशेषस्यैव[10] मायाशब्दाभिधेयत्वोपलम्भादतो न कदाचिदपि श्रुत्या[11][12]ऽनिर्वचनीयाज्ञानप्रतिपादनं नाप्यैक्योपदेशा[13]नुपपत्त्या तत्त्वंपदयोः सविशेषब्रह्माभिधेयत्त्वेन विरुद्धयोर्जीवपरयोः स्वरूपैक्यस्य[14] प्रतिपत्तुमशक्यतयाऽर्थापत्तेरनुदयदोषदूषितत्वात् । तथा हि तत्पदं निरस्तसमस्तदोषमनवधिका[15]तिशयासंख्येय[16]कल्याणगुणास्पदं जगदुदयविभवलयलीलं[17] ब्रह्म प्रतिपादयति, "तदैक्षत बहु स्यां प्रजायेय" (छा० ६ । २ । ३ ।) इत्यादिषु तस्यैव प्रकृतत्वात्[18]समानाधिकरणं त्वंपदं[19] वा चिद्विशिष्टं जीवशरीरं[20] ब्रह्माऽऽचष्टे प्रकारद्वयविशिष्टैकवस्तुपरत्वात्[21]सामानाधिकरण्यस्य । ननु सोऽयं देवदत्त इतिवत्[22]तत्त्वमिति पदयोर्विरुद्धभागत्यागलक्षणयोर्निर्विशेषस्वरूपमात्मैक्यं सामानाधिकरण्यार्थः किं न स्यात् । यथा सोऽयमित्यत्र तच्छब्देन देशान्तरकालान्तरसंबन्धी पुरुषः प्रतीयते, इदं शब्देन च[23] संनिहितदेश[24]वर्तमानकालसंबन्धी तयोः सामानाधिकरण्येनैक्यमवगम्यते । तत्रैकस्य[25] युगपद्विरुद्धदेशकालप्रतीतिर्न संभवतीति द्वयोरपि पदयोः स्वरूपपरत्वे[26] स्वरूपस्य चैक्यं प्रतिपत्तुं शक्यमेवमत्रापि किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धांशप्रहाणेना[27]खण्डस्वरूपं लक्ष्यत इति चेद्विषमोऽयमुपन्यासः । दृष्टान्तेऽपि विरोधवैधुर्येण लक्षणागन्धासंभवादेकस्य तावद्भूतवर्तमानकालद्वयसं-

१ ख. नतयै° । घ. °नमेव । २ क. ख. ग. °प्राप्यं फ° । ३ ख. °फलकं क° । ४ क. ग. विन्दन्ति । ख. विन्दति । ५ ख. °ते प्र° । ग. °तेनहि प्रत्येथा इ° । ६ ख. °गात्रि° । ७ क. ख. ग. घ. °तच्छंव° । ( तत्संवर इति स्यात् ) ८ क. ग. घ. °कैकश्ये° । ९ च. °नधूलित° । १० ग. °कस्यासु° । ११ घ. °वास्त्रवि° । १२ ङ. ख. घ. श्रुतावनि° । १३ ग. °शान्यथा नु° । १४ क. °क्यपरस्य । १५ ग. °कानति° । १६ च. °यगु° । १७ क. ग. °विल° । १८ च. °त्वात् । तत्समा° । १९ ग. घ. °दं चावि° । २० च. °रं व्याच° । २१ ख. °शिष्टकवस्तुविषयस्वात्सामा° । २२ ख. °इत्यादिवत्° । २३ ख. न । २४ ख. °शकालव° । २५ ख. °स्य विरु° । २६ ग. °रत्वं स्व° । २७ ख. °हारेणाख° ।

बन्धो न विरुद्धः । देशान्तरस्थितिर्भूतासंनिहितदेशास्थितिर्वर्तत इति देशभेदसंबन्धविरोधश्च कालभेदेन परिहरणीयः । लक्षणापक्षेऽप्येकस्यैव पदस्य लक्षणत्वाश्रयणेन विरोधपरिहारे पदद्वयस्य लाक्षणिकत्वस्वीकारो न संगच्छते । इतरथैकस्य वस्तुनस्तत्तेदंताविशिष्टत्वावगाहनेन प्रत्यभिज्ञायाः प्रामाण्यानङ्गीकारे स्थायित्वासिद्धौ क्षणभङ्गवादी बौद्धो विजयेत । एवमत्रापि जीवपरमात्मनोः शरीरात्मभावेन तादात्म्यं न विरुद्धमिति प्रतिपादितं, जीवात्मा हि ब्रह्मणः शरीरतया प्रकारत्वाद्ब्रह्मात्मकः । "य आत्मनि तिष्ठन्नात्मनोऽन्तरो य आत्मानं वेद यस्याऽऽत्मा शरीरम्" इति श्रुत्यन्तरात् । अत्यल्पमिदमुच्यते सर्वे शब्दाः परमात्मन एव वाचकाः । न च पर्यायत्वं द्वारभेदसंभवात्, तथा हि जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादिसंस्थानानीव सर्वाणि वस्तूनीति ब्रह्मात्मकानि तानि सर्वाणि । अतः–

देवो मनुष्यो यक्षो वा पिशाचोरगराक्षसाः ।
पक्षी वृक्षो लता काष्ठं शिला तृणं घटः पटः ॥

इत्यादयः सर्वे शब्दाः प्रकृतिप्रत्यययोगेनाभिधायकतया प्रसिद्धा लोके तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवद्वस्तुमुखेन तदभिमानिजीवतदन्तर्यामिपरमात्मपर्यन्तसंस्थानस्य वाचकाः । देवादिशब्दानां परमात्मपर्यन्तत्वमुक्तं तत्त्वमुक्तावल्यां चतुरन्तरे च ।

जीवं देवादिशब्दो वदति तदपृथक्सिद्धभावाभिधानं
निष्कर्षाकूतयुक्तो बहुरिह च दृढो लोकवेदप्रयोगः ।
आत्मासंबन्धकाले स्थितिरनवगता देवमर्त्यादिमूर्ति-
र्जीवात्मानुप्रवेशाज्जगति विभुरपि व्याकरोन्नामरूपे ॥ इति ।

अनेन देवादिशब्दानां शरीरपर्यन्तत्वं प्रतिपाद्य संस्थानैक्याद्यभाव इत्यादिना शरीरलक्षणं दर्शयित्वा शब्दैस्तत्त्वस्वरूपप्रतिकृतिभिरित्यादिना विश्वेश्वरादपृथक्सिद्धत्वमुपपाद्य निष्कर्षाकूतेत्यादिना पद्येन सर्वेषां

---

१ क. °बन्धावि° । २ ख. क्षणाश्र° । ३ क. रोधिप° । ४ ख. °त्वपक्षीका° । ग. घ. °त्वकक्षीका° । ५ घ. °दात्म्यमवि° । ६ क. ख. ग. °त्मानवे° । ७ ग. °रप्र° । ८ घ. स्थानीनि व° । ९ क. °नानिस° ख. °नानिव° । ग. °नानि सर्वाणि च व° । १० क. °नि इति ता° ख. °नि स° । ११ ख. ग. राक्षसः । १२ घ. तृणघ° । १३ ख. °खेत° । १४ च. °संघातस्य° । १५ क. ग. °वलीये च° । ख वल्यां जी° । १६ क. ग. चतुरुत्तरे । घ. चतुरे । च. चतुर्थसर्गे । जी° । १७ च. °र्षाभावयु° । १८ ख. प्रसाद्य । १९ क. ख. ग. घ. °प्रकृ° । २० ग. °कूतरीताविद्या° ।

शब्दानां परमात्मपर्यन्तत्वं प्रतिपादितं तत्सर्वं तत एवावधार्यम् । अयमेवार्थः समर्थितो वेदार्थसंग्रहे नामरूपश्रुतिव्याकरणसमये रामानुजेन ।

किंच सर्वप्रमाणस्य सविशेषविषयतया निर्विशेषवस्तुनि न किमपि प्रमाणं समस्ति निर्विकल्पप्रत्यक्षेऽपि सविशेषमेव वस्तु प्रतीयते । अन्यथा सविकल्पके सोऽयमिति पूर्वप्रतिपन्नप्रकारविशिष्टप्रतीत्यनुपपत्तेः । किंच तत्त्वमस्यादिवाक्यं न प्रपञ्चस्य बाधकं भ्रान्तिमूलकत्वात् । भ्रान्तिप्रयुक्तरज्जुसर्पवाक्यवन्नापि ब्रह्मात्मैक्यज्ञानं निवर्तकं तत्र प्रमाणामावस्य प्रागेवोपपादनात् । न च प्रपञ्चस्य सत्यत्वप्रतिष्ठापनपक्ष एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याकोपः प्रकृतिपुरुषमहदहंकारतन्मात्रभूतेन्द्रियचतुर्दशभुवनात्मकब्रह्माण्डतदन्तर्वर्तिदेवतिर्यङ्मनुष्यस्थावरादिसर्वप्रकारसंस्थानसंस्थितं कार्यमपि सर्वं ब्रह्मैवेति कारणभूतब्रह्मात्मज्ञानादेव सर्वविज्ञानं भवतीत्येकविज्ञानेन सर्वविज्ञानस्योपपन्नतरत्वात् । अपि च ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वे सर्वस्यासत्त्वादेवैकविज्ञानेन सर्वविज्ञानं बाध्येत, नामरूपविभागानर्हसूक्ष्मदशावत्प्रकृतिपुरुषशरीरं ब्रह्मकारणावस्थं जगत*स्तदापत्तिरेव प्रलयः । नामरूपविभागविभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्मकार्यावस्थं ब्रह्मणस्तथाविधस्थूलभावश्च सृष्टिरित्यभिधीयते । एवं च कार्यकारणयोरनन्यत्वमप्यारम्भणाधिकरणे प्रतिपादितमुपपन्नतरं भवति । निर्गुणवादाश्च प्राकृतहेयगुणनिषेधविषयतया व्यवस्थिताः । नानात्वनिषेधवादाश्चैकस्यैव ब्रह्मणः शरीरतया प्रकारभूतं सर्वं चेतनाचेतनात्मकं वस्त्विवति सर्वस्याऽऽत्मतया सर्वप्रकारं ब्रह्मैवावस्थितमिति सर्वात्मकब्रह्मपृथग्भूतवस्तुसद्भावनिषेधपरत्वाभ्युपगमेन प्रतिपादिताः । किमत्र तत्त्वं भेदोऽभेद उभयात्मकं वा सर्वं तत्त्वं, तत्र शरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदोऽभ्युपेयत एकमेव ब्रह्म नानाभूतचिदचित्प्रकारान्नानात्वेनावस्थितमिति भेदाभेदौ चिदचिदीश्वराणां स्वरूपस्वभाववैलक्षण्यादसंकराच्च भेदः । तत्र चिद्रूपाणां जीवात्मनामसंकुचितापरिच्छिन्ननिर्मलज्ञानरूपाणामनादिकर्मरूपाविद्यावेष्टितानां तत्त-

* ब्रह्मापत्तिः । घ. पु. ।

१ ग. °था सो° । २ च. प्रवृत्य । ३ च. °तिक्षेपपक्ष ए° । ४ क. ग. घ. किंच । ५ ग. °ज्ञानप्रतिज्ञाबा° । ६ ग. °गासह सूक्ष्मदशापन्नप्रकृ° । ७ क. ख. ग. °रं का° । ८ ग. स्वस्वरू° । ८ च. °पप्रभा° । ९ ग. °कर्मावि° ।

त्कर्मानुरूपज्ञानसंकोचविकाशौ भोग्यभूता चिद्भोक्ता संसर्गः, तदनुगुणसुखदुःखोपभोगद्वयवत्कृता भगवत्प्रतिपत्तिर्भगवत्पदप्राप्तिरित्यादयः स्वभावाः। अचिद्वस्तूनां तु भोग्यभूतानामचेतनत्वमपुरुषार्थत्वं विकारास्पदत्वमित्यादयः परस्येश्वरस्य भोक्तृभोग्ययोरन्तर्यामिरूपेणावस्थानमपरिच्छेद्यज्ञानैश्वर्यवीर्यशक्तितेजःप्रभृत्यनवस्थितिकातिशयासंख्येयकल्याणगुणगणता स्वसंकल्पप्रवृत्तस्वेतरसमस्ताचिदाचिद्वस्तुजातता स्वाभिमतस्वानुरूपैकरूपदिव्यरूपनिरतिशयविविधानन्तभूषणतेत्यादयः।

वेङ्कटनाथेन त्वित्थं निरटङ्कि पदार्थविभागः–

द्रव्याद्रव्यप्रभेदाथितमुभयविधं तद्विधं तत्त्वमाहुः
द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ।
अन्त्यं प्रत्यक्पराक्च प्रथममुभयथा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः॥
द्रव्यं नानादशावत्प्रकृतिरिह गुणैः सत्त्वपूर्वैरुपेता
कालोऽब्दाद्याकृतिः स्यादणुरवगतिमाञ्जीव ईशोऽन्य आत्मा॥
संप्रोक्ता नित्यभूतिस्त्रिगुणसमाधिका सत्त्वयुक्ता तथैव
ज्ञातुर्ज्ञेयावभासा मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म॥ इत्यादिना।

तत्र चिच्छब्दवाच्या जीवात्मानः परमात्मनः सकाशाद्भिन्नाः नित्याश्च। तथाच श्रुतिः,–"द्वा सुपर्णा सयुजा सखाया" (मु० ३।१।१। श्वे० ४।६।) इत्यादिका। अत एवोक्तं नानात्मानो व्यवस्थात इति। तन्नित्यत्वमपि श्रुतिप्रसिद्धम्–

न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।इति॥

अपरथा कृतप्रणाशाकृताभ्यागमप्रसङ्गः। अत एवोक्तं वीतरागजन्मादर्शनादिति। तदणुत्वमपि श्रुतिप्रसिद्धम्–

बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते (श्वे०५।९।)॥ इति।

---

१ क. ख. ग. घ. भोज्यभू°। २ क. °त्वपु°। ३ ख. घ. °ग्ययोरुभयोर°। ग. °ग्योभयोर°। ४ ग. °वधिकानतिश°। ५ क. °वृत्यस्वे। ख. घ °वृत्त्या स्वे°। ६ ख. °रूप्यैक°। ग. °रूपदि°। ७ ग. निरट°। ८ क. °दाभिमत°। ख. घ. °दामित°। ग. °दाभिमतमुभयधं। ९ घ. अन्ते। १० क. ख. घ. °डा वादिनः के° ग. °डामादिकां के°। ११ घ. °णुवरग°। १२ च. °हाद्दिव्य°। १३ ग. °वा कदाचिन्ना°। घ. वाऽपि कश्चि। १४ ख. अन्यथा।

आराग्रमात्रः पुरुष ( मु० ३।१।९ ) “अणुरात्मा चेतसा वेदितव्य” इति च ।

अचिच्छब्दवाच्यं दृश्यं जडं जगत्त्रिविधं भोग्यभोगोपकरणभोगायतनभेदात् । तस्य जगतः कर्तोपादानं चेश्वरपदार्थः पुरुषोत्तमो वासुदेवादिपदवेदनीयः । तदप्युक्तम्—

वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः ।
भुवनानामुपादानं कर्ता जीवनियामकः ॥ इति ।

स एव वासुदेवः परमकारुणिको भक्तवत्सलः परमपुरुषस्तदुपासकानुगुणतत्तत्फलप्रदानाय स्वलीलावशादर्चाविभवव्यूहसूक्ष्मान्तर्यामिभेदेन पञ्चधाऽवतिष्ठते । तत्रार्चा नाम प्रतिमादयः । रामाद्यवतारो विभवः । व्यूहश्चतुर्विधो वासुदेवसंकर्षणप्रद्युम्नानिरुद्धसंज्ञकः । सूक्ष्मं [3]सुपर्णं षड्गुणं वासुदेवाख्यं परं ब्रह्म । गुणा अपहतपाप्मत्वादयः । “सोऽपहतपाप्मा विजरो वि[4]मृत्युर्विशोको वि[5]जिघत्सः सत्यकामः सत्यसंकल्पः” (छा० ८।७।३)इति श्रुतेः । अन्तर्यामी सकलजीवनियामकः । “य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति” इति श्रुतेः । तत्र पूर्वपूर्वमूर्त्युपासनया पुरुषार्थपरिपन्थिदुरि[6]तनिचयक्षये सत्युत्तरोत्तरमूर्त्युपास्त्यधिकारः । तदुक्तम्—

वासुदेवः स्वभक्तेषु वात्सल्यात्तत्तदीहितम् ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ॥

तदर्थं लीलया स्वीयाः पञ्च मूर्तीः करोति वै ।
प्रतिमादिकमर्चा स्यादवतारास्तु वैभवाः ॥
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं संपूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः ॥
य आत्मनीतिवेदान्तवाक्यजालैर्निरूपितः ।
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत् ।
विभवोपासने पश्चाद्व्यूहोपास्तौ ततः परम् ।
सूक्ष्मे तदनु शक्तः स्यादन्तर्यामिणमीक्षितुम् ॥ इति ।

---

१ क. ख. ग. घ. °रुष एषोऽ° । २ घ. °क्ष्मं संपूर्णष° । ३ क. ख. ग. संपूर्ण । ४ ग. °ति । अन्तरात्मा स° । ५ घ. च. °मी अन्तरात्मा स° । ६ ग. °तक्ष° । ७ च. °तोत्पसौ प्र° । ८ घ. °नसाकल्ये कल्पितेऽधि° ।

तदुपासनं च पञ्चविधमभिगमनमुपादानमिज्या स्वाध्यायो योग इति श्रीपञ्चरात्रेऽभिहितम् । तत्राभिगमनं नाम देवतास्थानमार्गस्य संमार्जनोपलेपनादि । उपादानं गन्धपुष्पादिपूजासाधनसंपादनम् । इज्या नाम देवतापूजनम् । स्वाध्यायो नाम—अर्थानुसंधानपूर्वको मन्त्रजपो वैष्णवसूक्तस्तोत्रपाठो नामसंकीर्तनं तत्त्वप्रतिपादकशास्त्राभ्यासश्च । योगो नाम देवतानुसंधानम् । एवमुपासनाकर्मसमुच्चितेन विज्ञानेन द्रष्टृदर्शने नष्टे भगवद्भक्तस्य तन्निष्ठस्य भक्तवत्सलः परमकारुणिकः पुरुषोत्तमः स्वयाथात्म्यानुभवानुगुणनिरवधिकानन्तरूपं पुनरावृत्तिरहितं स्वपदं प्रयच्छति । तथा च स्मृतिः—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥(भ० गी० अ० ८। श्लो० १५) इति ।

स्वभक्तं वासुदेवोऽपि संप्राप्याऽऽनन्दमक्षयम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति ॥ [इति च] ।

तदेतत्सर्वं हृदि निधाय महोपनिषन्मतावलम्बनेन भगवद्बोधायनाचार्यकृतां ब्रह्मसूत्रवृत्तिं विस्तीर्णामालक्ष्य रामानुजः शारीरकमीमांसाभाष्यमकार्षीत् । तत्राथातो ब्रह्मजिज्ञासेति प्रथमसूत्रस्यायमर्थः—अत्राथशब्दः पूर्वप्रवृत्तकर्माधिगमनानन्तर्यार्थः । तदुक्तं वृत्तिकारेण—वृत्तात्कर्माधिगमादनन्तरं ब्रह्म विविदिषतीति । अतःशब्दो हेत्वर्थः । अधीतसाङ्गवेदस्याधिगततदर्थस्य विनश्वरफलात्कर्मणो विरक्तत्वाद्धेतोः स्थिरमोक्षाभिलाषुकस्य तदुपायभूतब्रह्मजिज्ञासा भवति । ब्रह्मशब्देन स्वभावतो निरस्तसमस्तदोषानवधिकातिशयासंख्येयकल्याणगुणः पुरुषोत्तमोऽभिधीयते । एवं च कर्मज्ञानस्य तदनुष्ठानस्य च वैराग्योत्पादनद्वारा चित्तकल्मषापनयद्वारा च ब्रह्मज्ञानं प्रति साधनत्वेन तयोः कार्यकारणत्वेन पूर्वोत्तरमीमांसयोरेकशास्त्रत्वम् । अत एव वृत्तिकारा एकमेवेदं शास्त्रं जैमिनीयेन षोडशलक्षणेनेत्याहुः । कर्मफलस्य क्षयित्वं ब्रह्मज्ञानफलस्य चाक्षयित्वं "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मु० १।२।१२) इत्यादिश्रुतिभिरनुमानार्थापत्त्युपबृंहिताभिः प्रत्यपादि । एकैकनिन्दया कर्मविशिष्टस्य ज्ञानस्य मोक्षसाधनत्वं दर्शयति श्रुतिः—"अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।

---

१ °र्गस्थं सं° । २ ख. ग. °र्वं वृ° । ३ ग. ह्मजिज्ञासा भवती° । ४ च. °धकत्वे° । ५ °क्षणमित्या° । ६ घ. °त्ययादिति । ए° ।

ततो भूय इव ते तमो य उ विद्यायां रताः। विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते "(बृ०४।४।१०) इत्यादि।

तदुक्तं पाञ्चरात्ररहस्ये—

स एव करुणासिन्धुर्भगवान्भक्तवत्सलः।
उपासकानुरोधेन भजते मूर्तिपञ्चकम्॥
तदर्चाविभवव्यूहसूक्ष्मान्तर्यामिसंज्ञकम्।
तदाश्रित्यैव चिद्वर्गस्तत्तज्ज्ञेयं प्रपद्यते॥
पूर्वपूर्वोदितोपास्तिविशेषक्षीणकल्मषः।
उत्तरोत्तरमूर्तीनामुपास्त्यधिकृतो भवेत्॥
एवं ह्यहरहः श्रौतस्मार्तधर्मानुसारतः।
उक्तोपासनया पुंसां वासुदेवः प्रसीदति॥
प्रसन्नात्मा हरिर्भक्त्या निदिध्यासनरूपया।
अविद्यां कर्मसंघातरूपां सद्यो निवर्तयेत्॥
ततः स्वाभाविकाः पुंसां ते संसारतिरोहिताः।
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः॥
एवं गुणाः समानाः स्युर्मुक्तानामीश्वरस्य च।
सर्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते॥
मुक्तास्तु शेषिणि ब्रह्मण्यशेषे शेषरूपिणः।
सर्वानश्नुवते कामान्सह तेन विपश्चिता॥ इति।

तस्मात्तापत्रयातुरैरमृतत्वाय पुरुषोत्तमादिपदवेदनीयं ब्रह्म जिज्ञासितव्यमित्युक्तं भवति। प्रकृतिप्रत्ययौ प्रत्ययार्थं प्राधान्येन सह ब्रूत इतः स नोऽन्यत्रेतिवचनबलादिच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधेयं तच्च ध्यानोपासनादिशब्दवाच्यं वेदनं न तु वाक्यजन्यमापातज्ञानं पदसंदर्भश्राविणो व्युत्पन्नस्य विधानमन्तरेणापि प्राप्तत्वात्।"(बृ०२।४।५) "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"।(बृ०२।४।५) आत्मेत्येवोपासीत"(बृ०१।४।७)विज्ञाय प्रज्ञां कुर्वीत। "अनुविद्य विजानाति" (छा०८।१२।६) इत्यादिश्रुतिभ्यः। अत्र श्रोतव्य इत्यनुवादः। अध्ययनविधिना साङ्गस्य स्वाध्यायस्य ग्रहणेऽधीतवेदस्य पुरुषस्य

---

१ क. ख. ग. घ. यदा°। २ ग. °स्युर्भक्ता°। ३ ड. °त्वैः प्र°।

प्रयोजनवदर्थदर्शनात्तन्निर्णयाय स्वरसत एव श्रवणे प्रवर्तमानतया *तस्य प्राप्तत्वात् । मन्तव्य इति चानुवादः श्रवणप्रतिष्ठार्थत्वेन मननस्यापि प्राप्तत्वादप्राप्ते शास्त्रमर्थवदिति न्यायात् । ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंतानरूपा वा स्मृतिः स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति ध्रुवायाः स्मृतेरेव मोक्षोपायत्वश्रवणात् । सा च स्मृतिदर्शनसमानाकारा ॥

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे "(मु०२।२।८)॥

इत्यनेनैकत्वात् । तथा च "आत्मा वा अरे द्रष्टव्यः" ( बृ०२।४।५ ) इत्यनेनास्या दर्शनरूपता विधीयते । भवति च भावनाप्रकर्षात्स्मृतेर्दर्शनरूपत्वम् । वाक्यकारेणैतत्सर्वं प्रपञ्चितं वेदनमुपासनं स्यादित्यादिना । तदेव ध्यानं विशिनष्टि श्रुतिः,—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् "(कठ०२।२३) इति । प्रियतम एव हि वरणीयो भवति यथाऽयं प्रियतममात्मानं प्राप्नोति तथा स्वयमेव भगवान्प्रियतम इति । भगवतैवाभिहितम्—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ ( भ० गी० अ० १० श्लो० १० ) इति ।

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ( भ० गी० अ० ८ श्लो० २२ ) इति च ।

भक्तिस्तु निरतिशयानन्दप्रियानन्यप्रयोजनसकलेतरवैतृष्ण्यवज्ज्ञानविशेष एव । तत्सिद्धिश्च विवेकादिभ्यो भवतीति वाक्यकारेणोक्तं तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्चेति । तत्र विवेको नामादुष्टादन्नात्सत्त्वशुद्धिः। अत्र निर्वचनम्,—आहारशुद्धेः सत्त्वशुद्धिः, सत्त्वशुद्ध्या ध्रुवा स्मृतिरिति । विमोकः कामानभिष्वङ्गः। शान्त उपासीतेति निर्वचनम् । पुनः पुनः संशीलनम-

*तस्य श्रवणस्य प्राप्तत्वात् ॥ घ. पु. टि.।

१ ख. °र्थज्ञाना° । २ क. ग. तस्याः । ३ ख. इत्यनुवादमात्रं श्र° । ४ क. °पि अप्रा° । ५ क. ख. ग. घ. °पा ध्रुवा° । ६ ख. मोक्षहेतुत्व° । ७ ग. °क. वाक्यत्वा° । ८ ख. ग. घ. °त्मा वृ° । ९ ख. शयप्रि° । १० क. ग. °नप्रि° । ११ च. °मानामभि° ।

भ्यासः । निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण सदा तद्भावभावित इति । श्रौतस्मार्तकर्मानुष्ठानं शक्तितः क्रिया । क्रियावानेष ब्रह्मविदां वरिष्ठ इति निर्वचनम् । सत्यार्जवदयादानादीनि कल्याणानि । सत्येन लभ्यत इत्यादि निर्वचनम् । दैन्यविपर्ययोऽनवसादः । नायमात्मा बलहीनेन लभ्यत इति निर्वचनम् । *तद्विपर्ययजा तुष्टिरनुद्धर्षः । शान्तो दान्त इति निर्वचनम् । तदेवमेवंविधनियमविशेषसमासादितपुरुषोत्तमप्रसादविध्वस्ततमःस्वान्तस्यानन्यप्रयोजनानवरतनिरतिशयप्रियैवदात्मप्रत्ययावभासतापन्नध्यानरूपया भक्त्या पुरुषोत्तमपदं लभ्यत इति सिद्धम् । तदुक्तं यामुनेन-उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगो लभ्य इति ज्ञानकर्मयोगसंस्कृतान्तःकरणस्येत्यर्थः ।

किं पुनर्ब्रह्म जिज्ञासितव्यमित्यपेक्षायां लक्षणमुक्तं 'जन्माद्यस्य यतः' इति । जन्मादीति सृष्टिस्थितिप्रलयं तद्गुणसंविज्ञानो बहुव्रीहिः । अस्याचिन्त्यविविधरचनारच्यस्य नियतदेशकालभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतो यतो यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसंकल्पाद्यनवधिकातिशयासंख्येयकल्याणगुणात्सर्वज्ञात्सर्वशक्तेः पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्त इति सूत्रार्थः ।

इत्थंभूते ब्रह्मणि किं प्रमाणमिति जिज्ञासायां शास्त्रमेव प्रमाणमित्युक्तं 'शास्त्रयोनित्वात्' इति । शास्त्रं योनिः कारणं प्रमाणं यस्य तच्छास्त्रयोनि तस्य भावस्तत्त्वं तस्माद्ब्रह्मज्ञानकारणात्मज्ञानकारणत्वाच्छास्त्रस्य तद्योनित्वं ब्रह्मण इत्यर्थः । न च ब्रह्मणः प्रमाणान्तरगम्यत्वं शङ्कितुं शक्यमतीन्द्रियत्वेन प्रत्यक्षस्य तत्र प्रवृत्त्यनुपपत्तेः । नापि महार्णवादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानस्य पूतिकुष्माण्डायमानत्वात् । तल्लक्षणं ब्रह्म, 'यतो वा इमानि भूतानि,' इत्यादिवाक्यं प्रतिपादयतीति स्थितम् ।

यद्यपि ब्रह्म प्रमाणान्तरगोचरतां नावतरति तथाऽपि प्रवृत्तिनिवृत्तिपरत्वाभावे सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयितुं प्रभवतीति एतत्पर्यनुयोगपरिहारायोक्तं 'तत्तु समन्वयात्' इति । तुशब्दः प्रसक्ताशङ्काव्यावृत्त्यर्थः । तच्छास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव । कुतः समन्व-

---

* दैन्यविपर्यजा घ. पु. टि.

---

१ घ. °तिच नि° । २ च. °स्तध्वान्त° । ३ च. °यविशदात्मकभासतापन्नस्य ध्या° । ४ क. ख. ग. घ. स्वान्तस्यैका° । ५ ग. °फलभो° । ६ ग. °कानति° । ७ क. ख. ग. घ. च. नहि ।

यात् । परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयादित्यर्थः । न च प्रवृत्तिनिवृत्त्योरन्यतरविरहिणः प्रयोजनशून्यत्वं स्वरूपपरेष्वपि पुत्रस्ते जातो नायं सर्प इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टमेवेति न किंचिदनुपपन्नम् । दिङ्मात्रमत्र प्रदर्शितं विस्तरस्त्वाकरादेवावगन्तव्य इति विस्तरभीरुणोदास्यत इति सर्वमनाकुलम् ।

इति सर्वदर्शनसंग्रहे रामानुजदर्शनम् ।

---

## अथ पूर्णप्रज्ञदर्शनम् ॥ ५ ॥

---

तदेतद्रामानुजमतं जीवाणुत्वदासत्ववेदापौरुषेयत्वसिद्धार्थबोधकत्वस्वतःप्रमाणत्वप्रमाणत्रित्वपाञ्चरात्रोपजीव्यत्वप्रपञ्चभेदसत्यत्वादिसाम्येऽपि परस्परविरुद्धभेदादिपक्षत्रयकक्षीकारेण क्षपणकपक्षनिक्षिप्तमित्युपेक्षमाणः स आत्मा तत्त्वमसीत्यादिवेदान्तवाक्यजातस्य भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेनाऽऽनन्दतीर्थः प्रस्थानान्तरमास्थिषत । तन्मते हि द्विविधं तत्त्वं स्वतन्त्रास्वतन्त्रभेदात् ।

तदुक्तं तत्त्वविवेके—

स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान्विष्णुर्निर्दोषोऽशेषसद्गुणः ॥ इति ।

ननु सजातीयविजातीयस्वगतनानात्वशून्यं ब्रह्मतत्त्वमिति प्रतिपादकेषु वेदान्तेषु जागरूकेषु कथमशेषसद्गुणत्वं तस्य कथ्यत इति चेन्मैवं, भेदप्रमापकबहुप्रमाणविरोधेन तेषां तत्र प्रामाण्यानुपपत्तेः । तथा हि प्रत्यक्षं तावदिदमस्माद्भिन्नमिति नीलपीतादेर्भेदमध्यक्षयति । अथ मन्येथाः किं प्रत्यक्षभेदमेवावगाहते किं वा धर्मिप्रतियोगिघटितम् । न प्रथमः । धर्मिप्रतियोगिप्रतिपत्तिमन्तरेण तत्सापेक्षस्य भेदस्याशक्याध्यवसायत्वात् । द्वितीयोऽपि धर्मिप्रतियोगिग्रहणपुरःसरं भेदग्रहणमथवा युगपत्सर्वग्रहणम् । न पूर्वः, बुद्धेर्विरम्य व्यापाराभावादन्योन्याश्र-

---

१ च. °पन्नेऽपि । २ ग. °षप्रासिम । ३ क. ख. ग. घ. °कर एवा° । ४ . °सत्वे वे° । ५ क. ग. °पञ्चरात्र° । ६ ग. °त्वादिवेदा° । ७ ग. °सा व्या° । ८ च. °रमकार्षीत् । अस्मिन्मते । ९ ग. °तत्त्वपरत° । १० ग. तन्त्रं परत° । ११ ग. °दोषाशे° । १२ क. ख. °षषड्गु° । १३ ख. °भगा° । १४ क. ख. ग. °तीयेऽपि ।

यप्रसङ्गाच्च । नापि चरमः कार्यकारणबुद्ध्योर्यौगपद्याभावात् । धर्मिप्र-तीतिर्हि भेदप्रत्ययस्य कारणं, संनिहितेऽपि धर्मिणि व्यवहितप्रतियो-गिज्ञानमन्तरेण भेदस्याज्ञातत्वेनान्वयव्यतिरेकाभ्यां कार्यकारणभावाव-गमात् । तस्मान्न भेदप्रत्यक्षं सुप्रसरमिति चेत्किं वस्तुस्वरूपभेदवादिनं प्रति इमानि दूषणान्युद्घुष्यन्ते किं वा धर्मिभेदवादिनं प्रति । प्रथमे चोरापराधान्माण्डव्यनिग्रहन्यायापातः । भवदभिधीयमानदूषणानां तद-विषयत्वात् । ननु वस्तुस्वरूपस्यैव भेदत्वे प्रतियोगिसापेक्षत्वं न घटते घटवत्प्रतियोगिसापेक्ष एव सर्वत्र भेदः प्रथम इति चेन्न प्रथमं सर्वतो विलक्षणतया वस्तुस्वरूपे *ज्ञायमाने +प्रतियोग्यपेक्षया विशिष्टव्यवहारो-पपत्तेः । तथा हि परिमाणघटितं वस्तुस्वरूपं प्रथममवगम्यते पश्चात्प्रति-योगिविशेषापेक्षया ह्रस्वं दीर्घमिति तदेव विशिष्य व्यवहारभाजनं भवति । तदुक्तं विष्णुतत्त्वनिर्णये—न च विशेषणविशेष्यतया भेदसिद्धिः विशेषणविशेष्यभावश्च भेदापेक्षः, धर्मिप्रतियोग्यपेक्षया भेदासिद्धिः, भेदापेक्षं च धर्मिप्रतियोगित्वमित्यन्योन्याश्रयतया भेदस्य युक्तिः पदार्थस्वरूपत्वाद्भेदस्येत्यादिना । ×अत एव गवा-र्थिनो गवयदर्शनान्न प्रवर्तन्ते गोशब्दं च न स्मरन्ति । न च नीरक्षी-रादौ स्वरूपे गृह्यमाणे भेदप्रतिभासोऽपि स्यादिति भणनीयं समानाभि-हारादिप्रतिबन्धकबलाद्भेदभानव्यवहाराभावोपपत्तेः ।

तदुक्तम्—

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ इति ।

अतिदूराद्गिरिशिखरवर्तितर्वादौ, अतिसामीप्याल्लोचनाञ्जनादौ, इन्द्रि-यघाताद्विद्युदादौ मनोनवस्थानात्कामाद्युपप्लुतमनस्कस्य स्फीतालोक-वर्तिनि घटादौ सौक्ष्म्यात्परमाण्वादौ व्यवधानात्कुड्याद्यन्तर्हिते, अभि-

---

* ज्ञानविषये । घ. पु. । + जाते सति अनन्तरमितिशेषः घ. पु. । × यतः सर्वतो विलक्षणतत्तद्वस्तुस्वरूपज्ञानं तत्तद्वस्तुनो विशिष्टव्यवहारे कारणमत एव गवार्थिनो लक्षणगवयादि वस्तुज्ञानसत्त्वेऽपि न गोविषकविशिष्टव्यवहाररूपप्रवृत्त्यादिः संभवतीत्यर्थः ।

---

१ च. °प्रतियोगिप्रातिपात्तिभे° । २ घ. °रणमेवं प्रतियोगिप्रतीतिरपिसं° । ३ घ. °त् । व° । ४ चेन्नैतत्सारं स° । ५ क. ख. ग. घ. ङ. °भेदासि° । ६ क. ख. ग. दस्यायु° । घ. °दस्यायुक्तत्वं प° । ७ °पेण गृ° । ८ क. ग. घ. °ड्यान्त° ।

भवा[1]द्विवाप्रदीपप्रभादौ समानाभिहारान्नीरक्षीरादौ यथावद्ग्रहणं नास्ती-त्यर्थः। भवतु वा धर्मभेदवादस्तथाऽपि न कश्चिद्दोषः। धर्मिप्रतियोगिग्रहणे सति[2] धर्मभेदभान[3]संभवात्। न च धर्मभेद[4]वादे तस्य तस्य भेदस्य भेदा-न्तरभेद्यत्वेनानवस्था दुरवस्था स्यादित्यास्थेयं भेदान्तर[5]प्रसक्तौ [6]मूलाभावा-द्भेदभेदिनौ भिन्नाविति व्यवहारदर्शनात्। न[7] चैकभेदबलेनान्यभेदानु-मानं *दृष्टान्तभेदाविघातेनोत्थाने दोषाभावात्। सोऽयं पिण्याक[8]याच-नार्थं गतस्य[9] खारिकातैलदातृत्वाभ्युपगम इव। दृष्टान्तभेदविमर्दे त्वनु-त्थानमेव। नहि वरविघाताय कन्योद्वाहः। तस्मान्मूलक्षयाभावादन-वस्था न[11] दोषाय। अनुमानेनापि भेदोऽवसीयते, परमेश्वरो जीवाभिन्नः, तं प्रति सेव्यत्वाद्यो यं प्रति सेव्यः स तस्माद्भिन्नः। यथा भृत्याद्राजा। न हि सुखं[12] मे[13] स्याद्दुःखं मे न मनागपि[14], इति पुरुषार्थमर्थयमानाः पुरुषाः[15] स्थपतिपदं कामयमाना[16]ः सत्कार[17]भाजो भवेयुः प्रत्युत सर्वानर्थभाजनं[18] भवन्ति। यः स्व[19]स्याऽऽत्मनो हीनत्वं परस्य गुणोत्कर्षं च कथयति स स्तुत्यः प्रीतः स्तावकस्य तस्याभीष्टं प्रयच्छति। तदाह—

[20]घातयन्ति हि राजानो राजाऽहमितिवादिनः[21]।
ददत्यखिलमिष्टं च स्वगुणोत्कर्षवादिनाम्[22]॥ इति।

एवं च परमेश्वराभेदतृष्णया विष्णोर्गुणोत्कर्षस्य मृगतृष्णिकासमत्वा-[23]भिधानं विपुलकदलीफललिप्सया जिह्वाच्छेदनमनु ह[24]रति, एतादृशवि-[25]ष्णुविद्वेषणादन्धतमसप्रवेशप्रसङ्गात्। तदेतत्प्रतिपादितं मध्यमन्दिरेण महाभारततात्पर्यनिर्णये—

---

* धर्मभेदवति धर्मिणि धर्मभेदासिद्धिबलेन भेदान्तरानुमानं विमतो धर्मभेदो भेदान्तरभेद्यो भेदत्वाद्धर्मिविशेषणीभूतभेदवदित्यनुमानं दृष्टान्तभेदाविघातकं विघातकं वेति विकल्प्याऽऽद्यं निराचष्टे। दृष्टान्तेति द्वितीयं निराचष्ट दृष्टान्तभेद विमर्देत्विति।

---

१ ख. °भेवा°। २ च. °ति पश्चात्तद्घटितभेदग्रहणोपपत्तेः। न च परस्पराश्रयप्रसङ्गः। परानन-पेक्ष्य प्रभेदशालिनो वस्तुनो ग्रहणे सति ध°। ३ च °नप्रसङ्गात्। न। ४ च. दभानवा°। ५ ग. °रमस°। ६ ख. °मूलभा°। ७ घ. °नाच नचैतद्बलेनान्यभेदान्तरानु°। ८ क. ग. नच भे°। ९ क. ख. ग. घ. °कपाच°। १० च. °स्य भौतिकस्य खा°। ११ च. न तेषामावहति। अ°। १२ क. ग. °खं मे म°। १३ च मे नाभूदिति। १४ ख. ग. °पि पु°। १५ घ. °रुषास्तस्य स्थाविष्ठप°। १६ घ. °माना-मानस°। १७ च. दानमानभाजो। १८ घ. °जना भवेयुः। यः। १९ ग. स्वस्यात्म°। २० घ. यात-यन्ति। च. विघातयन्ति। २१ घ. दिनम्। द°। २२ घ. °दिनम्। इ°। २३ च. विफल°। २४ घ. सरति। २५ ख. °तं मेदय°।

अनादिद्वेषिणो दैत्या विष्णोर्द्वेषो विवर्धितः ।
तमस्यन्धे पातयति दैत्यानन्धे विनिश्चयात् । इति ॥

सा च सेवा—अङ्कननामकरणभजनभेदात्त्रिविधा । तत्राङ्कनं नारायणायुधादीनां तद्रूपस्मरणार्थमपेक्षितार्थसिद्ध्यर्थं च । तथा च शाकल्यसंहितापरिशिष्टम्—

चक्रं बिभर्ति पुरुषोऽभितप्तं
बलं देवानाममृतस्य विष्णोः ॥
स याति नाकं दुरितावधूय
विशन्ति यद्यतयो वीतरागाः ॥
देवासो येन विधृतेन बाहुना
सुदर्शनेन प्रयातास्तमायन् ।
येनाङ्किता मनवो लोकसृष्टिं
वितन्वन्ति ब्राह्मणास्तद्वहन्ति ॥
तद्विष्णोः परमं पदं येन गच्छन्ति लाञ्छिताः ।
उरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवामः ॥ इति ।

अतप्ततनूर्न तदामो अश्नुते श्रितास इद्वहन्तस्तत्समासत" इति तैत्तिरीयकोपनिषच्च । स्थानविशेषश्चाऽऽग्नेयपुराणे दर्शितः—

दक्षिणे तु करे विप्रो बिभृयाच्च सुदर्शनम् ।
सव्येन शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥ इति ।

अन्यत्र चक्रधारणे मन्त्रविशेषश्च दर्शितः—

सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते, इति ॥

नामकरणं पुत्रादीनां केशवादिनाम्ना व्यवहारः सर्वदा तन्नामानुस्मरणार्थम् । भजनं दशविधं वाचा सत्यं हितं प्रियं स्वाध्यायः कायेन दानं

---

१ घ. °द्वेषविवृद्धितः । २ क. ख. ग. पातयन्ति । ३ ग. °नन्धविनिश्चया इ° । ४ ग. र्थं त° । ५ ङ. °ाश्च ये° । ६ घ. °दर्शन । ७ च. °याताः स्वर्गमा° । ८ घ. येनाग° । ९ च. °त्रमृद्धारणे । १० ख. घ. च. निर्मितः ।

परित्राणं परिरक्षणं मनसा दया स्पृहा श्रद्धा चेति । अत्रैकैकं निष्पाद्य नारायणे समर्पणं भजनम् । तदुक्तम्-

अङ्कनं नामकरणं भजनं दशधा च तत् । इति ॥

एवं ज्ञेयत्वादिनाऽपि भेदोऽनुमातव्यः, तथा श्रुत्याऽपि भेदोऽवगन्तव्यः सत्यमेतमनु विश्वे मदन्ति रातिं देव गृणतो मघोनः। सत्यासो अस्य महिमागृणे शवो यज्ञेषु विप्रराज्ये। सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुण्यो मयि वारुण्यो मयि वारुण्य इति मोक्षानन्दभेदप्रतिपादकश्रुतिभ्यः ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ ( भ०गी०अ० १४ श्लो० २ )

जगद्व्यापारवर्जं प्रभुकरणासंनिहितत्वाच्चेत्यादिभ्यश्च । न च " ब्रह्म वेद ब्रह्मैव भवति "(मु०३।२।९)इति श्रुतिबलाज्जीवस्य पारमैश्वर्यं शक्यशङ्कं संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेदितिवद्बृंहितो भवतीत्यर्थपरत्वात् । ननु-

प्रपञ्चो यदि वर्तेत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

इति वचनाद्द्वैतस्य कल्पितत्वमवगम्यत इति चेत्सत्यं, भावमनभिसंधायाभिधानात् । तथा हि यद्ययमुत्पद्येत तर्हि निवर्तेत न संशयः । तस्मादनादिरेवायं प्रकृष्टः पञ्चविधो भेदप्रपञ्चः । न चायमविद्यमानो मायामात्रत्वान्मायेति भगवदिच्छोच्यते ।

महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यते ॥
प्रकृतिः प्रकृष्टकरणाद्वासना वासयेद्यतः ।
अ इत्युक्तो हरिस्तस्य मायाऽविद्येति संज्ञिता ॥
मायेत्युक्ता प्रकृष्टत्वात्प्रकृष्टे हि मयाभिधा ।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ॥
प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा ॥

---

१ क. ग. घ. परित्राणनं । २ क. ख. ग सा इ° । ३ च. °नन्तरभे° । ४ च. वर्ज्यं प्रभुहितोभ° । ५ क. ख. ग. घ. प्रकरणादस° । ६ घ. °श्वर्यमशक्य° । ७ क. ग. °त्पद्यते त° । ८ क. ख. ग. °मानमा° । ९ क. ख. ग. °वत्प्रज्ञोच्य° । च. वत्प्रज्ञोच्य° । १० ख. °त्वदिच्छा° ।

इत्यादिवचननिचयप्रामाण्यबलात्सैव प्रज्ञा मानत्राणकर्त्री च यस्य तन्मायामात्रं ततश्च परमेश्वरेण ज्ञातत्वाद्रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितं, न हीश्वरे सर्वस्य भ्रान्तिः संभवति विशेषादर्शननिबन्धनत्वाद्भ्रान्तेः । तर्हि तद्व्यपदेशः कथमित्यत्रोत्तरमद्वैतं परमार्थत इति । ( *परमार्थत इति ) परमार्थापेक्षया । तेन सर्वस्मादुत्तमस्य विष्णुतत्त्वस्य समाभ्यधिकशून्यत्वमुक्तं भवति । तथा च परमा श्रुतिः—

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ॥
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ॥
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।
मतं हि ज्ञानिनामेतन्मितं त्रातं हि विष्णुना ।
तस्मान्मात्रमिति प्रोक्तं परमो हरिरेव तु ॥ इत्यादि ।

तस्माद्विष्णोः सर्वोत्कर्ष एव तात्पर्यं सर्वागमानाम् ।

एतदेवाभिसंधायाभिहितं भगवता—

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ' ( अ० १५-श्लो० १६।२० ) इति ॥

---

* धनुश्चिह्नान्तर्गतं न घ. ङ. पुस्तकयोः ।

---

१ ख. 'दिलक्षणव' । २ ख. 'माण्यात्' । ३ घ. मात्रं त्रा' । ४ घ. 'तन्मतं' ।

महावराहेऽपि—

मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतौ परे ।
उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम् । इति ॥

युक्तं च विष्णोः सर्वोत्कर्षे महातात्पर्यम् । मोक्षो हि सर्वपुरुषार्थोत्तमः । धर्मार्थकामास्त्वनित्याः । मोक्ष एव नित्यः । तस्मान्नित्यं तदर्थाय यतेत मतिमान्नर इति भाल्लवेयश्रुतेः । मोक्षश्च विष्णुप्रसादमन्तरेण न लभ्यते । यस्य प्रसादात्परमोपत्स्वरूपात्तस्मात्संसारान्मुच्यते नावरे सुरानाराधयन्तोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मादिति नारायणश्रुतेः ।

तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं
सर्वार्थकामैरलमल्पकास्ते ।
समाश्रिताद्ब्रह्मतरोरनन्तात्
निःसंशयं मुक्तिफलं प्रयान्ति ॥

इति विष्णुपुराणोक्तेश्च । प्रसादश्च गुणोत्कर्षज्ञानादेव नाभेदज्ञानादित्युक्तम् । न च तत्त्वमस्यादितादात्म्यव्याकोपः श्रुतितात्पर्यापरिज्ञानविजृम्भणात्—

"आह नित्यपरोक्षं तु तच्छब्दो ह्यविशेषितः ।
त्वंशब्दश्चापरोक्षार्थं तयोरैक्यं कथं भवेत् ॥
आदित्यो यूप इतिवत्साहश्यार्था तु सा श्रुतिः" इति ।

तथा च परमा श्रुतिः—

"जीवस्य परमैक्यं च बुद्धिसारूप्यमेव वा ।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा ॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपता ।
स्वातन्त्र्यपूर्णतेऽल्पत्वपारतन्त्र्ये विरूपता ॥ इति ।

अथवा तत्त्वमसीत्यत्र स एवाऽऽत्मा स्वातन्त्र्यादिगुणोपेतत्वात् । अतत्त्वमसि त्वं तन्न भवसि तद्रहितत्वादित्येकत्वमतिशयेन निराकृतम् । तदाह—

१ च. °षार्थेषूत्त° । २ च. °मास्वरू° । ३ घ. °पान्मुक्तस्तस्मा° । ४ च. °स्मात्प्रसादान्मु° । ५ च. नापरेण नारायणोऽसौ । ६ घ. °रानराना° । च. ७ °भिः । नावरेसुरानाराधयन्तोऽसौ परमो विचिन्त्यो समुक्षुभिः क° । ८ च. °र्भ धर्मार्थ° । ९ च शेषतः । १० क. ग. °त् । त° । ख. °त् । तत° ।

अतत्त्वमिति वा छेदस्तेनैक्यं सुनिराकृतम् ॥ इति ।

[1]तत्तस्माद्दृष्टान्तनवकेऽपि स यथा शकुनिः सूत्रेण[2] बद्ध इत्यादिना भेद एव दृष्टान्ताभिधाना[3]यायमभेदोपदेश इति तत्त्ववादरहस्यम् । तथा च महोपनिषत्—

यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा ॥
चोरापहार्यौ च यथा यथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥
तथाऽपि सूक्ष्मरूपत्वान्न जीवात्परमो हरिः ।
भेदेन[4] मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ॥
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा ॥ इति ।
ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षराऽतः परो हरिः ॥
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ।
निःसीमत्वेन ते सर्वे तद्वशाः सर्वदेवताः ॥ इति ।
विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः ।
निर्दुःखानन्दभुङ्नित्यं तत्समीपे स मोदते ॥
मुक्तानां चाऽऽश्रयो विष्णुरधिकाधिपतिस्तथा ।
तद्वशा एव ते सर्वे सर्वदैव[5] स ईश्वरः ॥ इति च ।

एकविज्ञानेन सर्वविज्ञानं च प्रधानत्वकारणत्वादिना युज्यते न तु सर्वमिथ्यात्वेन । न हि सत्ताज्ञानेन मिथ्याज्ञानं संभवति, यथा प्रधानपुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो ज्ञातो[6]ऽज्ञात इत्येवमादिव्यपदेशो दृष्ट एव । यथा च कारणे पितरि ज्ञाते जानात्य[7]स्य पुत्रमिति । अन्यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातमित्यत्र एकपिण्डशब्दौ[8] वृथा प्रसज्येयातां मृदा विज्ञातयेत्येतावतैव वाक्यस्य पूर्णत्वात् । न च वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव[11] सत्यमित्येतत्कार्यस्य मिथ्यात्वमाचष्ट इत्येष्टव्यं वाचा[9]रम्भणं[10] विकारो यस्य तदविकृतं नित्यं नामधेयं

---

१ क. ख. ग. घ च. तस्मा° । २ घ. °ण प्रब° । ३ ख. °नान्नाय° । ग. °नानाय° । ४ ख. °न भेदद° । ५ ख °र्वदैववा इ° । ध. °र्वदैव च इ° । ६ च. ज्ञात आहूत । ७ च. जानाम्यस्य । ८ ख. घ. °ब्दौ न प्रयुज्येया° । ९ क. ख. ग. वाचनमार° । १० घ. °वाचनमर° म्भणं रम्भणं विकारो न म्भणमरम्भणं तथा च विकारः अ° । ११ ख. ग. °रोऽविकृ° ।

मृत्तिकेत्यादिकमित्येतद्वचनं सत्यमिति तथ्यस्य स्वीकारात्। अपरथा नामधेयमेवेति शब्दयोर्वैयर्थ्यं प्रसज्येत। अतो न कुत्रापि जगतो मिथ्यात्वसिद्धिः। किं च प्रपञ्चो मिथ्येत्यत्र मिथ्यात्वं तथ्यमतथ्यं वा। प्रथमे सत्याद्वैतभङ्गप्रसङ्गः। चरमे प्रपञ्चसत्यत्वापातः। नन्वनित्यत्वं नित्यमनित्यं वा, उभयथाऽप्यनुपपत्तिरित्याक्षेपवदय*मपि नित्यसमजातिभेदः स्यात्तदुक्तं न्यायनिर्वाणवेधसा—नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसम इति। तार्किकरक्षायां च—

धर्मस्य तदतद्रूपविकल्पानुपपत्तितः।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्॥ इति।

अस्याः संज्ञाया उपलक्षणत्वमभिप्रेत्याभिहितं प्रबोधसिद्धावन्वार्थत्वात्तूपरञ्जकधर्मसमेति। तस्मात्सदुत्तरमेतदिति चेत्, अशिक्षितत्रासनमेतत्। दुष्टत्वमूलानिरूपणात्। तद्द्विविधं साधारणमसाधारणं च। तत्राऽऽद्यं स्वव्याघातकं, द्वितीयं त्रिविधं युक्ताङ्गहीनत्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वं चेति। तत्र साधारणमसंभावितमेवोक्तस्याऽऽक्षेपस्य स्वात्मव्यापनानुपलम्भात्। एवमसाधारणमपि घटस्य नास्तितेतौयां नास्तितोक्तावस्तित्ववत्प्रकृतेऽप्युपपत्तेः। ननु प्रपञ्चस्य मिथ्यात्वमभ्युपेयते नासत्त्वमिति चेत्तदेतत्सोऽयं शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकं तु प्रयच्छतीति शाकटिकवृत्तान्तमनुहरेत्। मिथ्यात्वासत्त्वयोः पर्यायत्वादित्यलमतिप्रपञ्चेन।

तत्राथातो ब्रह्म जिज्ञासेति प्रथमसूत्रस्यायमर्थः। तत्राथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च स्वीक्रियते। अतःशब्दो हेत्वर्थः। तदुक्तं गारुडे—

अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि।
प्रारभेत नियत्यैव तत्किमत्र नियामकम्॥

---

* अयमपि मिथ्यात्वरूपधर्मोऽपि। घ. पु. टि।

---

१ क. ख. ग घ. °क मेवेत्य°। २ ख. °मिथ्यस्य। ग. घ. मित्यतथ्यस्य। ३ ख. °पि मि°। ४ घ °मे पक्षे सत्याद्वैतभङ्गः। ५ क. सत्यद्वैतभङ्गः। च°। ६ ख ग. °भङ्गः। च°। ७ ख. न च नि°। ८ ग. °त्वम°। ९ ख. °नित्यं भा°। १० ग. नित्ये नि°। ११ क ख. ग. °स्मादसदु°। १२ क. ख. ग. घ. क्षित त्रा°। १३ क. ख. °विषमसा°। १४ ग. °नम°। १५ ङ. °स्तितो°। १६ क. ख. ग. घ. °तायानां। १७ ख. °प्रसङ्गेन। १८ घ. प्रारभ्यन्ते।

कश्चार्थस्तु तयोर्विद्वान्कथमुत्तमता तयोः ।
एतदाख्याहि मे ब्रह्मन्यथा ज्ञास्यामि तत्त्वतः ॥
एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ।
आनन्तर्याधिकारे च मङ्गलार्थे तथैव च ॥
अथशब्दस्त्वतःशब्दो हेत्वर्थे समुदीरितः ॥ इति ।

यतो नारायणप्रसादमन्तरेण न मोक्षो लभ्यते प्रसादश्च ज्ञानमन्तरेण, अतो ब्रह्मजिज्ञासा कर्तव्येति सिद्धम् । जिज्ञास्यब्रह्मणो लक्षणमुक्तं जन्माद्यस्य यत इति । सृष्टिस्थित्यादि यतो भवति तद्ब्रह्मेति वाक्यार्थः । तथा च स्कान्दं वचः—

उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥ इति ।

यतो वा इमानीत्यादिश्रुतिभ्यश्च । तत्र प्रमाणमप्युक्तं शास्त्रयोनित्वादिति । नावेदविन्मनुते तं बृहन्तं तं त्वौपनिषदमित्यादिश्रुतिभ्यस्तस्याऽऽनुमानिकत्वं निराक्रियते । न चानुमानस्य स्वातन्त्र्येण प्रामाण्यमस्ति । तदुक्तं कौर्मे—

श्रुतिसाहय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥
श्रुतिस्मृतिसहायं यत्प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ॥ इति ।

शास्त्रस्वरूपमुक्तं स्कान्दे—

ऋग्यजुः सामाथर्वा च भारतं पाञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥ इति ।

तदनेनानन्यलभ्यः शास्त्रार्थ इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्यं किंत्वद्वैत एव वेदवाक्यानां तात्पर्यमिति अद्वैतप्रत्याशा प्रतिक्षिप्ता, अनुमानादीश्वरस्य सिध्द्यभावेन तद्भेदस्यापि ततः सिध्द्यभावात् । तस्मान्न भेदानुवादकत्वमिति *तत्परत्वमवगम्यते । अत एवोक्तम्—

* शास्त्रस्य ।

१ घ. °विद्वन्क° । २ च. °त्तरता । ३ ग. °त्रता । ४ च. °तवादिनां प्र° । ५ ख. °श्च तद्भेदा° ।

सदागमैकविज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥ इति ।

शास्त्रस्य तत्र प्रामाण्यमुपपादितं तत्तु समन्वयादिति समन्वय उपक्रमादिलिङ्गम् । उक्तं बृहत्संहितायाम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

एवं वेदान्ततात्पर्यवशात्तदेव ब्रह्म शास्त्रगम्यमित्युक्तं भवति । दिङ्मात्रमत्र प्रादर्शि शिष्टमानन्दतीर्थभाष्यव्याख्यानादौ द्रष्टव्यं ग्रन्थबहुत्वभियोपरम्यत इति । एतच्च रहस्यं पूर्णप्रज्ञेन मध्यमन्दिरेण वायोस्तृतीयावतारंमन्येन निरूपितमिति ।

प्रथमस्तु हनूमान्स्याद्द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयश्च भगवत्कार्यसाधकः ॥ इति ।

एतदेवाभिप्रेत्य तत्र तत्र ग्रन्थसमाप्ताविदं पद्यं लिख्यते—

यस्य त्रीण्युदितानि वेदवचने दिव्यानि रूपाण्यलं
ह्येतद्दर्शितमित्थमेतदखिलं वेदस्य गर्भे महः ।
वायो रामवचोनतं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यस्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

एतत्पद्यार्थस्तु "बळित्थातद्वपुषे धायि दर्शितं देवस्य भर्गः सहसो यतोजनि" इत्यादिश्रुतिपर्यालोचनयाऽवगम्यत इति । तस्मात्सर्वस्य शास्त्रस्य विष्णुतत्त्वं सर्वोत्तममित्यत्र तात्पर्यमिति सर्वं निरवद्यम् ॥

इति सर्वदर्शनसंग्रहे पूर्णप्रज्ञदर्शनम् ।

---

## अथ नकुलीशपाशुपतदर्शनम् ॥ ६ ॥

---

तदेतद्वैष्णवमतं दासत्वादिपदवेदनीयं परतन्त्रं दुःखावहत्वान्न दुःखान्तादीप्सितास्पदमित्यरोचयमानाः पारमैश्वर्यं कामयमानाः पराभिमता

१ क. ख. घ. मध्य° । २ घ. °न्दिरभट्टपुत्रेण । ३ ख. मार्गे । ग. गर्भो । च. मर्गो म° । ४ च. पक्षो । ५ च. केसव । ६ च. °मिति निर्व्यूढम् । ७ च. °मतरीत्यादा° । ८ ग. °नीयपरतन्त्रं दुः° । ९ च. °मत्वं दुःखावहत्वंनदुःखान्तादिपदास्पदमि° । १० क. ग. घ. °नाः पर° । ११ घ. °मिका मु° । ङ. °मिहता ।

मुक्ता न भवन्ति परतन्त्रत्वात्, पारमैश्वर्यरहितत्वादस्मदादिवत्, मुक्तात्मानश्च परमेश्वरगुणसंबन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात्परमेश्वरवदित्याद्यनुमानं प्रमाणं प्रतिपद्यमानाः केचन माहेश्वराः[1] परमपुरुषार्थसाधनपञ्चार्थप्रपञ्चनपरं[2] पाशुपतशास्त्रमाश्रयन्ते । तत्रेदमादिसूत्रम्, अथातः पशुपतेः पाशुपतयोगविधिं[3] व्याख्यास्याम इति । अस्यार्थः—अत्राथशब्दः पूर्वप्रकृतापेक्षः । पूर्वप्रकृतश्च गुरुं प्रति शिष्यस्य प्रश्नः । गुरुस्वरूपं[4] गणकारिकायां निरूपितम्—

पञ्चकास्त्वष्ट विज्ञेया गणश्चैकत्रिकात्मकः[5] ।
वेत्ता नवगणस्यास्य[6] संस्कर्ता गुरुरुच्यते ॥ इति ।
लाभा मला उपायाश्च देशावस्थाविशुद्धयः ।
दीक्षाकारिबलान्यष्टौ पञ्चकास्त्रीणि वृत्तयः ॥ इति ।

तिस्रो वृत्तय इति प्रयोक्तव्ये त्रीणि वृत्तय इति च्छान्दसः प्रयोगः । तत्र विधीयमानमुपायफलं लाभः । ज्ञानतपोदेवनित्यत्वस्थितिशुद्धि[7]भेदात्पञ्चविधः । तदाह हरदत्ताचार्यः 'ज्ञानं तपोऽथ नित्यत्वं स्थितिः शुद्धिश्च पञ्चमम्' इति । आत्माश्रितो दुष्टभावो मलः स मिथ्याज्ञानादिभेदात्पञ्चविधः । तदप्याह[8]—

मिथ्याज्ञानमधर्मश्च सक्तिर्हेतुश्च्युतिस्तथा ।
पशुत्वमूलं पञ्चैते तन्त्रे[9] हेया विविक्तितः ॥ इति ।

साधकस्य[10] शुद्धिहेतुरुपायो वासचर्यादिभेदात्पञ्चविधः । तदप्याह—

वासचर्या जपो ध्यानं सदा रुद्रस्मृतिस्तथा ।
प्रतिपत्तिश्च[11] लाभानामुपायाः पञ्च निश्चिताः ॥ इति ।

येनार्थानुसंधानपूर्वकं[12] ज्ञानतपोवृद्धी प्राप्नोति स देशो गुरुजनादिः यदाह—

गुरुर्जनो गुहादेशः श्मशानं रुद्र एव च ॥ इति ।

आलाभप्राप्तेरेकतमादौ[13] यदवस्थानं साऽवस्था व्यक्तादिविशेषेण विशिष्टा ।

---

१ क. ग. महेश्वराः° । २ ख. °धनं प° । ३ ङ. °तयाग° । ४ ग. °पं गुण° । ५ च. °कत्रिरात्म° । ६ ख. °वगुण° । ७ ख. घ. °पोनि° । ग. पोथनि° । च. ८ °ह ज्ञानं धर्मश्च नित्यत्वं स्थितिः सिद्धिश्च पञ्चममिति । प° । ९ च. तन्त्रभेदाविवार्जिता इति । १० च. °धनस्य शुद्धिवृद्धिहे° । ११ घ. प्रपत्तिश्चेति ला° । १२ च. °नार्थेन साधकः शुद्धिवृ° । १३ च. °कमर्यादावस्थितस्य य° ।

तदुक्तम्–

व्यक्ताव्यक्तार्जपादानं निष्ठा चैव हि पञ्चमम् ॥ इति ।

मिथ्याज्ञानादीनामत्यन्तव्यपोहो विशुद्धिः । सा प्रतियोगिभेदात्पञ्चविधा । तदुक्तम्–

अज्ञानस्याप्य[३]सङ्गस्य हानिः सङ्गकरस्य च ।
च्युतिर्हानिः पशुत्वस्य शुद्धिः पञ्चविधा स्मृता ॥ इति ।

दीक्षाकारिपञ्चकं चोक्तम्–

द्रव्यं कालः क्रिया मूर्तिर्गुरुश्चैव हि पञ्चमः । इति ॥

बलपञ्चकं च–गुरुभक्तिः प्रसादश्च मतेर्द्वन्द्वजयस्तथा ।
धर्मश्चैवाप्रमादश्च बलं पञ्चविधं स्मृतम् ॥ इति ।

पञ्चमललघूकरणार्थं मानामानविरोधिनोऽन्नार्जनोपाया वृत्तयो भैक्ष्योत्सृष्टयथालब्धाभिधा इति । शेषमशेषमाकर एवावगन्तव्यम् ।

अत्राथशब्देन दुःखान्तस्य प्रतिपादनम् । आध्यात्मिकादिदुःखव्यपोहप्रश्नार्थत्वात्तस्य पशुशब्देन कार्यस्य परतन्त्रवचनत्वात्तस्य पतिशब्देन कारणस्येश्वरः पतिरीशितेति जगत्कारणीभूतेश्वरवचनत्वात्तस्य । योगविधी तु प्रसिद्धौ । तत्र दुःखान्तो द्विविधः–अनात्मकः सात्मकश्चेति । तत्रानात्मकः सर्वदुःखानामत्यन्तोच्छेदरूपः । सात्मकस्तु दृक्क्रियाश[१०]क्तिलक्षणमैश्वर्यम् । [११]यत्र दृक्शक्तिरेकाऽपि विषयभेदात्पञ्चविधोपचर्यते दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति । तत्र सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पर्शादिविषयं ज्ञानं दर्शनम् । अशेषशब्दविषयं सिद्धिज्ञानं श्रवणम् । समस्तचिन्ताविषयं सिद्धिज्ञानं मननम् । निरवशेषशास्त्रविषयं ग्रन्थतो[१२]ऽर्थतश्च सिद्धिज्ञानं विज्ञानम् । उक्तानुक्ताशेषार्थेषु समासविस्तरविभागविशेषतश्च तत्त्वव्याप्तसदोदितसिद्धिज्ञानं सर्वज्ञत्वम्, इत्येषा धीशक्तिः[१३] । क्रियाशक्तिरेकाऽपि त्रिविधोपचर्यते *मनोजवित्वं कामरूपित्वं विक्रमणधर्मित्वं चेति । तत्र निरतिशयशीघ्र-

* मनोजयित्वमित्यपि । घ. पुस्तके ।

१ क. ख. ग. घ. °अयादा° । २ च. तुपञ्चमीति । ३ च. °प्यधर्मस्य । ४ क. ख. घ. च्युतेर्हा° । ५ °णार्थमागमावि° । ६ घ. °त्रातः श° । ७ च. °खत्रयव्य° । ८ च. °स्य तत्रप° । ९ च. °स्तु दुःखक्रि° । १० ङ. °क्तिश्च° । च. °क्तिबललक्ष° । ११ क. ख. ग. च. तत्र । १२ च. °विस्तार । १३ च. विकरण° ।

कारित्वं मनोजवित्वम् । कर्मादिनिरपेक्षस्य स्वेच्छयैवानन्तसलक्षणविलक्षणसरूपकरणाधिष्ठातृत्वं कामरूपित्वम् । उपसंहृतकरणस्यापि निरतिशयैश्वर्यसंबन्धित्वं विक्रमणधर्मित्वमित्येषा क्रियाशक्तिः । यदस्वतन्त्रं सर्वं कार्यं[तत्] त्रिविधं विद्या कला पशुश्चेति । तत्र पशुगुणो विद्या । साऽपि द्विविधा—बोधाबोधस्वभावभेदात् । बोधस्वभावा विवेकाविवेकप्रवृत्तिभेदात् । द्विविधा । तत्र या विवेकप्रवृत्तिः प्रमाणमात्रव्यङ्ग्या[सा]चित्तमित्युच्यते । चित्तेन हि सर्वः प्राणी बाह्यार्थात्मकप्रकाशानुगृहीतं सामान्येन विवेचितमविवेचितं चार्थं चेतयत इति । पश्वर्थधर्माधर्मिका पुनरबोधात्मिका विद्या । स्वशास्त्रं येनोच्यते चेतनपरतन्त्रत्वे सत्यचेतना कला । साऽपि द्विविधा—कार्याख्या कारणाख्या चेति । तत्र कार्याख्या दशविधा-पृथिव्यादीनि पञ्च तत्त्वानि, रूपादयः पञ्च गुणाश्चेति । कारणाख्या त्रयोदशविधा—ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम्, अध्यवसायाभिमानसंकल्पाभिधवृत्तिभेदाद्बुद्ध्यहंकारमनोलक्षणमन्तःकरणत्रयं चेति । पशुत्वसंबन्धी पशुः । सोऽपि द्विविधः—साञ्जनो निरञ्जनश्चेति । तत्र साञ्जनः शरीरेन्द्रियसंबन्धी निरञ्जनस्तु तद्रहितः । तत्प्रपञ्चस्तु पञ्चार्थभाष्यदीपिकादौ द्रष्टव्यः । समस्तसृष्टिसंहारानुग्रहकारि कारणं तस्यैकस्यापि गुणकर्मभेदापेक्षया विभाग उक्तः पतिः साद्य इत्यादिना । तत्र पतित्वं निरतिशयदृक्क्रियाशक्तिमत्त्वं तेनैश्वर्येण नित्यसंबन्धित्वम्, आद्यत्वमनागन्तुकैश्वर्यसंबन्धित्वम् । इत्यादर्शकारादिभिस्तीर्थकरैर्निरूपितम् ।

चित्तद्वारेणाऽऽत्मेश्वरसंबन्धो योगः । स च द्विविधः क्रियालक्षणः क्रियोपरमलक्षणश्चेति । तत्र जप्यध्यानादिरूपः क्रियालक्षणः । क्रियोपरमलक्षणस्तु संविद्गत्यादिसंज्ञितः । धर्मार्थसाधकव्यापारो विधिः । स च द्विविधः—प्रधानभूतो गुणभूतश्च—तत्र प्रधानभूतः साक्षाद्धर्महेतुं ।

---

१ च. °तकार° । २ च. विकरण° । ३ च. °क्तिः शब्दस्वरूपं तत् । य । ४ च. °ति । एतेषां ज्ञानात्संशयादिनिवृत्तिः । त° । ५ घ. °दाद्विधा । ६ च. °न सर्वसंमतं वि° । ७ ङ. °चितश्चार्थं । ८ च. °लक्ष्यम° । ९ च. तत्संबधहीनः । त° । १० च. °र्मांव° । ११ च. सान्ना इ° । १२ क. °शयिद° ग. शयिकाक्रि° । १३ घ. °शक्तिः सत्त्वं । १४ क. ग. °क्ति सत्त्वं । १५ च. °र्यविभवसंपन्नं सत्त्वंब° । १६ च. °णः । नित्यः क्रि° । १७ क. जन्यध्या° । ख. घ. च. जपध्या° । १८ च. °णः ब्राह्मणादावैरनुष्ठीयमानः फलप्रदः । क्रि° । १९ च. °स्तु निष्ठासं° । २० घ. °हेतु च° ।

श्चर्या। सा द्विविधा व्रतं द्वाराणि चेति। तत्र भस्मस्नानशय्योपहारजपप्रदक्षिणानि व्रतम्। तदुक्तं भगवता नकुलीशेन–भस्मना त्रिषवणं स्नायीत भस्मनि शयीतेति। अत्रोपहारो नियमः। स च षडङ्गः। तदुक्तं सूत्रकारेण–हसितगीतनृत्यहुडुक्कारनमस्कारजप्यषडङ्गोपहारेण उपतिष्ठेतेति। तत्र हसितं नाम कण्ठोष्ठपुटविस्फूर्जनपुरःसरमहहहेत्यट्टहासः। गीतं गान्धर्वशास्त्रसमयानुसारेण महेश्वरसंबन्धिगुणधर्मादिनिमित्तानां चिन्तनम्। नाट्यमपि नाट्यशास्त्रानुसारेण हस्तपादादीनां संक्षेपणादिकमङ्गप्रत्यङ्गोपाङ्गसहितं भावाभावसमेतं च प्रयोक्तव्यम्। हुडुक्कारो नाम जिह्वातालुसंयोगान्निष्पाद्यमानः पुण्यो वृषनादसदृशो नादः। हुडुगिति शब्दानुकारो वषडितिवत्। यत्र लौकिका भवन्ति तत्रैतत्सर्वं गूढं प्रयोक्तव्यम्। शिष्टं प्रसिद्धम्। द्वाराणि तु क्राथनस्पन्दनमन्दनशृङ्गारणावितत्करणावितद्भाषणानि। तत्रासुप्तस्यैव सुप्तलिङ्गवद्दर्शनं क्राथनम्। वाय्वभिभूतस्येव शरीरावयवानां स्पन्दनं कम्पनम्। उपहतपादेन्द्रियस्येव गमनं मन्दनम्। रूपयौवनसंपन्नां कामिनीमवलोक्याऽऽत्मानं कामुकमिव यैर्विलासैः प्रदर्शयति तच्छृङ्गारणम्। कार्याकार्यविवेकविकलस्येव लोकनिन्दितकर्मकरणमवितत्करणम्। व्याहतापार्थकादिशब्दोच्चारणमवितद्भाषणमिति। गुणभूतस्तु [विधिः] चर्यानुग्राहकोऽनुस्नानादि भैक्षोच्छिष्टादिनिर्मितायोग्यताप्रत्ययनिवृत्त्यर्थः। तदप्युक्तं सूत्रकारेण–अनुस्नाननिर्माल्यलिङ्गधारीति। तत्र समासो नाम धर्मिमात्राभिधानं तच्च प्रथमसूत्र एव कृतम्। पञ्चानां पदार्थानां प्रमाणतः पञ्चाभिधानं विस्तरः। स खलु राशीकरभाष्ये द्रष्टव्यः। एतेषां यथासंभवं लक्षतोऽसंकरेणाभिधानं विभागः। स तु विहितशास्त्रान्तरेभ्योऽमीषां गुणातिशयेन कथनं विशेषः। तथा हि–अन्यत्र दुःखनिवृत्तिरेव दुःखान्तः। इह तु पारमैश्वर्यप्राप्तिश्च। अन्यत्राभूत्वा भावि कार्यमिह तु नित्यं पश्वादि।

१ च. °तं पारायणं चे°। २ ग. °स्मस्मशान श°। ३ च शयनोप°। ४ ख. °त्यद्भुद्भुक्का°। ग. °त्यहुड्क्का°। ५ ख. °हहे°। ६ क. ख. ग घ. ङ. च. म्। नृत्यम°। ७ च. °शास्त्रसमयानु°। ८ क. ख. ग. घ ङ. च. °दीनासुत्क्षेप°। ९ च. तुकायस्पर्शनमादानशृ°। १० घ. °नमादन°। ११ च. °तस्कर°। १२ च. °णादि। त°। १३ च. °ङ्गप्रदर्शनं कायक्रा°। १४ घ. मादनम्। १५ च प्रकाशयति। १६ ङ. भैक्ष्योच्छि°। १७ ख. °रणमा°। १८ क. ख. घ. °तोऽभिधानमसंकरेण वि°। १९ घ. °हितःशा°। च. °हित एवशास्त्रान्तरोक्तपदार्थे गु°। १९ च. °येनाभिधानं। २० ख °त्रगुणानि°।

अन्यत्र सापेक्षं कारण[1]मिह तु निरपेक्षो भगवानेव । अन्यत्र कैवल्यादिफलको योगः । इह तु पारमैश्वर्यदुःखान्तफलकः । अन्यत्र पुनरावृत्तिः स्वर्गादि[2] । इह पुनरपुनरावृत्तिरूपः सामीप्यादिफलकः ।

ननु महदेतदिन्द्रजालं यन्निरपेक्षं परमेश्वरकारणमिति तथात्वे कर्मवैफल्यं सर्वकार्याणां समसमय[3]समुत्पादश्चेति दोषद्वयं प्रादुःष्यात् मैवं मन्येथाः । व्यधिकरणत्वात्, यदि निरपेक्षस्य भगवतः कारणत्वं स्यात्तर्हि कर्मणो वैफल्ये[4] किमायातम्, प्रयोजनाभाव इति चेत्कस्य प्रयोजनाभावः । कर्मवैफल्ये[5] कारणं किं कर्मिणः किंवा भगवतः । नाऽऽद्यः । ईश्वरे[6]च्छानुगृहीतस्य कर्मणः सफलत्वोपपत्तेः । तद[7]ननुगृहीतस्य ययातिप्रभृतिकर्मवत्कदाचिन्निष्फलत्वसंभवाच्च[8] । न चैतावता कर्मस्वप्रवृत्तिः कर्षकादिवदुपपत्तेः । ईश्वरेच्छायत्तत्वाच्च पशूनां प्रवृत्तेः । नापि द्वितीयः परमेश्वरस्य पर्याप्तकामत्वेन कर्मसाध्यप्रयोजना[9]पेक्षाया अभावात् । यदुक्तं समसमयसमुत्पाद इति तदप्ययुक्तमचिन्त्यशक्तिकस्य परमेश्वरस्येच्छानुविधायिन्या अ[10]व्याहतक्रियाशक्त्या कार्यकारित्वाभ्युपगमात् । तदुक्तं संप्रदायविद्भिः—

कर्मादिनिरपेक्षस्तु स्वेच्छा[11]चारी यतो ह्ययम् ।
त[12]तः कारणतः शास्त्रे सर्वका[13][14]रणकारणम् ॥ इति ।

ननु दर्शनान्तरेऽपीश्वरज्ञानान्मोक्षो लभ्यत एवेति कुतोऽस्य विशेष इति चेन्मैवं वादीः । विकल्पानुपपत्तेः । किमीश्वरविषयज्ञानमात्रं निर्वाणकारणं किं वा साक्षात्कारः, अथवा यथावत्तत्त्वनिश्चयः । नाऽऽद्यः शास्त्रमन्तरेणापि प्राकृतजनवद्देवानामधिपो महादेव इति ज्ञानोत्पत्तिमात्रेण मोक्षसिद्धौ शास्त्राभ्यासवैफल्य[15]प्रसङ्गात् । नापि द्वितीयः, अनेकमलप्रचयोपचिता[16]नां पिशितलोचनानां पशूनां परमेश्वरसाक्षात्कारानुपपत्तेः । तृतीयेऽस्मन्मतापातः पाशुपतशास्त्रमन्तरेण यथावत्तत्त्वनिश्चयानुपपत्तेः । तदुक्तमाचार्यैः—

---

१ क. ख. ग. करणं । च. कारकम् । २ च. °दिः फलको विधिः । इह तु पारमैश्वर्यदुःखान्त फलक इह । ३ क. ख. ग. घ. °यमु° ४ ख वैकल्ये । ५ ख. वैकल्ये । ६ ख. °श्वरानु° । ७ च. °दनु° । ८ क. °ल्त्वाभावा° । ग. घ. °ल्त्वभावा° । ९ ख. °नाकाङ्क्षा° । १० ख. अह° । ११ च. °च्छाकारी यथोचितम् । तत. कर्म्यैं स्मृतः शा° । १२ क. नातः । १३ व. °रकका° । १४ क °णकामता इ° । ग. °णतामता इ° । १५ ख. वैकल्य° । १६ घ. °तानामपि पिशीत° ।

ज्ञानमात्रे यथाशास्त्रं साक्षाद्दृष्टिस्तु दुर्लभा ।
पञ्चार्थादन्यतो नास्ति यथावत्तत्त्वनिश्चयः ॥ इति ।

तस्मात्पुरुषार्थकामैः पुरुषधौरेयैः पञ्चार्थप्रतिपादनपरं पाशुपतशास्त्रमाश्रयणीयम् ॥

इति सर्वदर्शनसंग्रहे नकुलीशपाशुपतदर्शनम् ।

---

## अथ शैवदर्शनम् ॥ ७ ॥

---

तमिमं परमेश्वरः कर्मादिनिरपेक्षः कारणमितिपक्षं वैषम्यनैर्घृण्यदोषदूषितत्वात्प्रतिक्षिपन्तः केचन माहेश्वराः शैवागमसिद्धान्ततत्त्वं यथावदीक्षमाणाः कर्मादिसापेक्षः परमेश्वरः कारणमिति पक्षं कक्षीकुर्वाणाः पक्षान्तरमुपक्षिपन्ति पतिपशुपाशभेदात्त्रयः पदार्था इति ।

तदुक्तं तन्त्रतत्त्वज्ञैः-

त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः ।
सूत्रेणैकेन संक्षिप्य प्राह विस्तरतः पुनः ॥ इति ।

अस्यार्थः । उक्तास्त्रयः पदार्था यस्मिन्सन्ति तत्त्रिपदार्थं विद्याक्रियायोगचर्याख्याश्चत्वारः पादा यस्मिंस्तच्चतुश्चरणं महातन्त्रमिति । तत्र पशूनामस्वतन्त्रत्वात्पाशानामचैतन्यात्तद्विलक्षणस्य पत्युः प्रथममुद्देशः । चेतनत्वसाधर्म्यात्पशूनां तदानन्तर्यम् । अवशिष्टानां पाशानामन्ते विनिवेश इति क्रमनियमः, दीक्षायाः परमपुरुषार्थहेतुत्वात्तस्याश्च पशुपाशेश्वरस्वरूपनिर्णयोपायभूतेन मन्त्रमन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात्तदवबोधकस्य विद्यापादस्य प्राथम्यम् । अनेकविधसाङ्गदीक्षाविधिप्रदर्शकस्य क्रियापादस्य तदानन्तर्यम् । योगेन विना नाभिमतप्राप्तिरिति साङ्गयोगज्ञापकस्य योगपादस्य तदुत्तरत्वम् । विहिताचरणनिषिद्धवर्जनरूपां चर्यां विना योगोऽपि[10] न निर्वहतीति तत्प्रतिपादकस्य चर्यापादस्य चरमत्वमिति विवेकः । तत्र पतिपदार्थः शिवोऽभिमतः । मुक्तात्मनां विद्येश्वरादीनां च यद्यपि शिवत्वमस्ति तथाऽपि परमेश्वरपारतन्त्र्यात्स्वातन्त्र्यं नास्ति । ततश्च

---

१ च. °त्रैवृधा शस्तं । २ च. °यमितिरमणीयम् । इ° । ३ ग. °शूनां स्व° । ४ ग. अविशि° । ५ ख. °न्ते नि° । ६ क. ख. कर्म नियमदीं° । घ. कर्मानियमयन्दीक्षा° । ७ च. °त्रतत्रे° । ८ च. °यस्यादने° । ९ च. °तिसांख्ययो° । १० च. योगेनापि ।

तदनुकरणभुवनादीनां भावानां संनिवेशविशिष्टत्वेन कार्यत्वमवगम्यते । तेन च कार्यत्वेनैषां बुद्धिमत्पूर्वकत्वमनुमीयत इत्यनुमानवशात्परमेश्वरप्रसिद्धिरुपपद्यते ।

ननु देहस्यैव तावत्कार्यत्वमसिद्धं न हि क्वचित्केनचित्कदाचिद्देहः क्रियमाणो दृष्टचरः । सत्यं तथाऽपि न केनचित्क्रियमाणत्वं देहस्य दृष्टमिति कर्तृदर्शनापह्नवो न युज्यते तस्यानुमेयत्वेनानुपपत्तेः । देहादिकं कार्यं भवितुमर्हति संनिवेशविशिष्टत्वाद्विनश्वरत्वाद्वा घटादिवत्तेन च कार्यत्वेन बुद्धिमत्पूर्वकत्वमनुमातुं सुकरमेव । विमतं सकर्तृकं कार्यत्वाद्घटवद्यदुक्तसाधनं तदुक्तसाध्यं न यदेवं न तदेवं यथाऽऽत्मादि । परमेश्वरानुमानप्रामाण्यसाधनानुमानमन्यत्राकारीत्युपरम्यते ।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥

इति न्यायेन प्राणिकृतकर्मापेक्षया परमेश्वरस्य कर्तृत्वोपपत्तेः । न च स्वातन्त्र्यविहतिरिति[11] वाच्यं कारणापेक्षया कर्तुः स्वातन्त्र्यविहतेरनुपलम्भात् । कोषाध्यक्षापेक्षस्य राज्ञः प्रसादादिना दानवत् । तथोक्तं[12] सिद्धगुरुभिः—

*स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता ।
कर्तुः स्वातन्त्र्यमेतद्धि न[13] कर्माद्यनपेक्षता[14] ॥ इति ।

तथा च तत्तत्कर्माशयवशाद्[15]भोगतत्साधनतदुपादानादिविशेषज्ञः[16] कर्ताऽनुमानादिसिद्ध इति सिद्धम् । तदिदमुक्तं तत्रभवद्भिर्बृहस्पतिभिः—

इह भोग्यभोगसाधनतदुपादानादि यो विजानाति ।
तमृते भवेन्नहीदं पुंस्कर्माशयविपाकज्ञम् ॥ इति ।

अन्यत्रापि—

---

* अप्रयोज्यत्वमविघातकत्वम् ।

---

१ ख. °द्धिपूर्व° । २ क. ख. °वो यु° । ३ च. °त्तेः । तथाहि । दे° । ४ क. ख. °न का° । ५ च. °मत्कार्यत्वानुमानं सु° । ६ ख. ग. °मास सु° । घ. °माने सु° । ७ च. °साधनं यथार्थादि व । ८ घ. °तोऽगच्छत्स्व । ९ च. वा दुःखमे° । १० च. मन्तव्यम् । ११ घ. कोशाध्य° । १२ क. ख. ग. घ. च. यथो° । १३ न कार्याद्यनपेक्षिता । १४ ख. द्यनपेक्षया । १५ ख. °र्मातिश° । १६ क. ख. ग. घ. षतः क° ।

विवादाध्यासितं सर्वं बुद्धिमत्पूर्वकर्तृकम्[1] ।
कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथा ॥ इति ।

सर्वात्मकत्वादेवास्य[2] सर्वज्ञत्वं सिद्धम् । अज्ञस्य[3] करणासंभवात्[4] ।

उक्तं च श्रीमन्मृगेन्द्रैः[5]–

सर्वज्ञः सर्वकर्तृत्वात्साधनाङ्गफलैः सह ।
यो यज्जानाति[6] कुरुते स तदेवेति[7] सुस्थितम् ॥ इति ।

अस्तु तर्हि स्वतन्त्र ईश्वरः कर्ता[8] स तु[9] तावदशरीरः, घटादिकार्यस्य शरीरवता कुलालादिना क्रियमाणत्वदर्शनात्[10] । शरीरवत्त्वे चास्मदादिवदीश्वरः[11] क्लेशयुक्तोऽसर्वज्ञः परिमितशक्ति[12] प्राप्नुयादिति चेन्मैवं[13] मंस्थाः । अशरीरस्याप्यात्मनः स्वशरीरस्पन्दादौ कर्तृत्वदर्शनादभ्युपगम्यापि ब्रूमहे शरीरवत्त्वेऽपि भगवतो न प्रागुक्तदोषानुषङ्गः । परमेश्वरस्य हि मलकर्मादि[14]पाशजालासंभवेन प्राकृतं शरीरं न भवति किं तु शाक्तं न क्तिरूपैरीशानादिभिः पञ्चभिर्मन्त्रैर्मस्तकादिकल्पनायामीशानमस्तकस्तत्पुरुषवक्त्रोऽघोरहृदयो वामदेवगुह्यः सद्योजातपाद ईश्वर इति प्रसिद्ध्या यथाक्रमानुग्रहतिरोभावादानलक्षणस्थितिलक्षणोद्भवलक्षणकृत्यपञ्चककारणं स्वेच्छानिर्मितं तच्छरीरं न चास्मच्छरीरसदृशम् ।

तदुक्तं श्रीमन्मृगेन्द्रैः[15]–मलाद्य[16]संभवाच्छाक्तं वपुर्नैतादृशं प्रभोः ॥ इति ।

अन्यत्रापि–

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः ।
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत् ॥ इति ।

ननु पञ्चवक्त्रस्त्रिपञ्चदृगित्यादिनाऽऽगमेषु परमेश्वरस्य मुख्यत एव शरीरेन्द्रियादियोगः श्रूयत इति चेत्सत्यं निराकारे ध्यानपूजाद्यसंभवेन भक्तानुग्रहकरणाय तत्तदाकारग्रहणाविरोधात् ।

तदुक्तं श्रीमत्पौष्करे–

साधकस्य तु रक्षार्थं तस्य रूपमिदं स्मृतम् ॥ इति ।

---

१ घ. °मत्कर्तृपूर्वकम् । २ च. सर्वकर्तृत्वा° । ३ ख अन्यस्य कार° । ४ स्य कार° । ५ मृगेन्द्रे । ६ क. ग. घ. यो यं जाना° । ७ क. ग. तदेवैति । ख. तदैवेति । ८ च. °र्तान स ता° । ९ °तु नाश° । १० क. °माणकर्तृत्व° । ११ च. °वदनीश्व° । १२ क. ख. ग. घ. शक्तिः । १३ ख. °ख. °न्मैव । १४ ख. °र्मा शयजा° । १५ घ. °गेन्द्रे । १६ ख. ग. मूला° । १७ च. °पपादिभिः । १८ च. °दिभिरिति ।

अन्यत्रापि—

आकारवांस्त्वं नियमादुपास्यो
न वस्त्वनाकारमुपैति बुद्धिः ॥ इति ।

कृत्यपञ्चकं च प्रपञ्चितं भोजराजेन—

पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावः ।
तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य ॥ इति ।

एतच्च कृत्यपञ्चकं शुद्धाध्वविषये साक्षाच्छिवकर्तृकं कृच्छ्राध्वविषये[1] त्वनन्तादिद्वारेणेति विवेकः । तदुक्तं श्रीमत्करणे—

शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽहिते प्रभोः ॥ इति ।

एवं च शिवशब्देन शिवत्वयोगिनां मन्त्रमन्त्रेश्वर[2]महेश्वरमुक्तात्मशिवानां सवाचकानां शिवत्वप्राप्तिसाधनेन[3] दीक्षादिनोपायकलापेन सह पतिपदार्थे[4] संग्रहः कृत इति बोद्धव्यम् । तदित्थं पतिपदार्थो निरूपितः ।

संप्रति पशुपदार्थो निरूप्यते—अनणुक्षेत्रज्ञादिपदवेदनीयो[5] जीवात्मा पशुः, न च चार्वाकादिवद्देहादिरूपः । नान्यदृष्टं स्मरत्यन्य इति न्यायेन प्रतिसंधानानुपपत्तेः[6] । नापि नैयायिकादिवत्प्रकाश्यः[7], अनवस्थाप्रसङ्गात् ।

तदुक्तम्—

आत्मा यदि भवेन्मेयस्तस्य माता भवेत्परः[8] ।
पर आत्मा तदानीं स्यात्स परो यदि दृश्यते ॥ इति ।

न च जैनवदव्यापकः, नापि बौद्धवत्क्षणिकः । देशकालाभ्यामनवच्छिन्नत्वात् । तदप्युक्तम्—

अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यता ॥ इति ।

नाप्यद्वैतवादिनामिवैकः, भोगप्रतिनियमस्य पुरुषबहुत्वज्ञापकस्य संभवात्, नापि सांख्यानामिवाकर्ता[9] पाशजालापोहने नित्यनिरतिशयदृक्क्रियारूपचैतन्यात्मकशिवत्वश्रवणात् । तदुक्तं श्रीमन्मृगेन्द्रैः[10]—

पाशान्ते शिवताश्रुतेः ॥ इति ।
चैतन्यं दृक्क्रियारूपं तदस्यास्त्यात्मनि सर्वदा ।
सर्वतश्च यतो मुक्तौ श्रूयते सर्वतोमुखम् ॥ इति ।

---

१ च. कृष्णाध्व° । २ च. मन्त्रेश्व° । ३ च. °धकेन । ४ घ. °दार्थसं° । ५ क. ख. ग. घ. अणुक्षे° । ६ क. ख. घ. °तिबन्धानु° । ७ ख. °यिकमतव° । ८ च. रः । प° । ९ ग. °नामेवा° । १० च. घ.च. °गेन्द्रे । पा° ।

तत्त्वप्रकाशेऽपि–

मुक्तात्मानोऽपि शिवाः किं चैते तत्प्रसादतो मुक्ताः ।
सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः ॥ इति ।

पशुस्त्रिविधः, विज्ञानाकलप्रलयाकलसकलभेदात् । तत्र प्रथमो विज्ञानयोगसंन्यासै[1]र्भोगेन वा[2] कर्मक्षये सति कर्मक्षयार्थस्य कलादिभोगबन्धस्याभावात्केवल[3]मलमात्रयुक्तो विज्ञानाकल इति व्यपदिश्यते । द्वितीयस्तु प्रलयेन कलादिरुपसंहारान्मलकर्मयुक्तः प्रलयाकल इति व्यवह्रियते । तृतीयस्तु मलमायाकर्मात्मकबन्धत्रयसहितः सकल इति +संलप्यते । तत्र प्रथमो द्विप्रकारो भवति समाप्तकलुषासमाप्तकलुषभेदात् । तत्राऽऽद्यान्कालुष्यपरिपाकवतः पुरुषधौरेयानधिकारयोग्याननुगृह्यानन्तादिविद्येश्वराष्टपदं प्रापयति । तद्विद्येश्वराष्टकं निर्दिष्टं बहुदैवत्ये–

अनन्तश्चैव सूक्ष्मश्च तथैव च शिवोत्तमः ।
एकनेत्रस्तथैवैकरुद्रश्चापि त्रिमूर्तिकः ॥
श्रीकण्ठश्च शिखण्डी च प्रोक्ता विद्येश्वरा इमे ॥ इति ।

अन्यान्सप्तकोटिसंख्यातान्मन्त्राननुग्रहकरणान्विधत्ते,तदुक्तं तत्त्वप्रकाशे–

पशवस्त्रिविधाः प्रोक्ता विज्ञानप्रलयकेवलौ सकलः ।
मलयुक्तस्तत्राँऽऽद्यो मलकर्मयुतो द्वितीयः स्यात् ॥
मलमायाकर्मयुतः सकलस्तेषु द्विधा भवेदाद्यः ।
आद्यः समाप्तकलुषोऽसमाप्तकलुषो द्वितीयः स्यात् ॥
आद्याननुगृह्य शिवो विद्येशत्वे नियोजयत्यष्टौ ।
मन्त्रांश्च करोत्यपरांस्ते चोक्ताः कोटयः सप्त ॥ इति ।

सोमशंभुनाऽप्यभिहितम्–

वि[10]ज्ञानकलनामैको द्वितीयः प्रलयाकलः ।
तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः ॥

---

+ सम्यगुच्यते । घ. पु. टि. ।

---

१ च. °सैर्योगे° । २ ग. वा कर्मक्षयार्थस्य । ३ क. ख. ग. °लमा° । ४ क. ख. ग. °नकाल° । ५ ख. °प्य त° । ६ ख. ज्ञानाप्र° । ७ घ. °त्रान्यो म° । ८ क. ख. ग. युक्तो द्वि° । ९ ख. युक्तः स° । १० ङ. °ज्ञानाक° ।

तत्राऽऽद्यो मलमात्रेण युक्तोऽन्यो मलकर्मभिः ।
कलादिभूमिपर्यन्ततत्त्वैस्तु सकलो युतः ॥ इति ।

प्रलयाकलोऽपि द्विविधः—पक्वपाशद्वयः, तद्विलक्षणश्च । तत्र प्रथमो मोक्षं प्राप्नोति द्वितीयस्तु पुर्यष्टकयुतः कर्मवशान्नानाविधजन्मभाग्भवति । तदप्युक्तं तत्त्वप्रकाशे—

प्रलयाकलेषु येषामपक्वमलकर्मणी व्रजन्त्येते ।
पुर्यष्टकदेहयुता योनिषु निखिलासु कर्मवशात् ॥ इति ।

पुर्यष्टकमपि तत्रैव निर्दिष्टम्—

स्यात्पुर्यष्टकमन्तःकरणं[3] धीः कर्म करणानि । इति ।

विवृतं चाघोरशिवाचार्येण—पुर्यष्टकं नाम प्रतिपुरुषं नियतः सर्गादारभ्य कल्पान्तं मोक्षान्तं वा स्थितः पृथिव्यादिकलापर्यन्तत्रिंशत्तत्त्वात्मकः सूक्ष्मो देहः ।

तथा चोक्तं तत्त्वसंग्रहे—

वसुधाद्यस्तत्त्वगणः प्रतिपुन्नियतः कलान्तोऽयम् ।
पर्यटति कर्मवशाद्भुवनजदेहेष्वयं च सर्वेषु ॥ इति ।

तथा चायमर्थः समपद्यत—अन्तःकरणशब्देन मनोबुद्ध्यहंकारचित्तवाचिनाऽन्यान्यपि पुंसो भोगक्रियायामन्तरङ्गाणि कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वान्युपलक्ष्यन्ते धीकर्मशब्देन ज्ञेयानि पञ्चभूतानि तत्करणानि च तन्मात्राणि विवक्ष्यन्ते[11] करणशब्देन ज्ञानकर्मेन्द्रियदशकं[12] संगृह्यते ।

ननु श्रीमत्कालोत्तरे—

शब्दः स्पर्शस्तथा रूपं[13] रसो गन्धश्च पञ्चकम् ।
बुद्धिर्मनस्त्वहंकारः पुर्यष्टकमुदाहृतम् ॥

इति श्रूयते, तत्कथमन्यथा कथ्यते । अद्धाऽत एव च तत्रभवता रामका[14]ण्डेन तत्सूत्रं[15] शक्तत्वपरतया व्याख्यायीत्यलमतिप्रपञ्चेन । तथाऽपि कथं पुनरस्य पुर्यष्टकत्वं भूततन्मात्रबुद्धीन्द्रियकर्मेन्द्रियान्तःकरणसंज्ञैः पञ्च-

---

१ घ. °पक्वे मलकर्मणी ईशप्रेरणविवशा जन्ममृता पुनर्व्रजन्त्यन्ये । पु° । २ क. ख. ग. °र्मणि पुनर्व्रजन्त्यन्ये । पु° । ३ घ. °रणधीकर्मकार° । ४ च. कलान्तं । ५ क. ग. घ. °वाऽवस्थि° । ६ घ. °र वा° । ७ क. ख. ग. घ. °कलनि° । ८ क. °यतावि° । ९ च. °लभ्यन्ते । १० ख घ. कारणानि । ११ क. ख. ग. घ. °न्ते कार° । १२ ख. संग्राह्यते । १३ घ. रूपरसौ ग° । १४ क. ख. ग. घ. ङ. रामकण्ठेन° । च. रामकर्णेन । १५ घ. °त्रं सत्तत्वप° । च. °त्रं त्रिंशत्तत्व वाचकत° ।

भिर्वर्गैस्तत्करणेन प्रधानेन कलादिपञ्चकात्मना वर्गेण चाऽऽरब्धत्वादित्यविरोधः । तत्र पुर्यष्टकयुतान्विशिष्टपुण्यसंपन्नान्कांश्चिदनुगृह्य भुवनपतित्वमत्र महेश्वरोऽनन्तः प्रयच्छति । तदुक्तम्—

कांश्चिदनुगृह्य वितरति भुवनपतित्वं महेश्वरस्तेषाम् ॥ इति ।

सकलोऽपि द्विविधः । पक्वकलुषापक्वकलुषभेदात् । तत्राऽऽद्यान्परमेश्वरस्तत्परिपाकपरिपाट्या तदनुगुणशक्तिपातेन मण्डल्याद्यष्टादशोत्तरशतं मन्त्रेश्वरपदं प्रापयति । तदुक्तम्—

शेषा भवन्ति सकलाः कलादियोगादहर्मुखे काले ।
शतमष्टादश तेषां कुरुते स्वयमेव मन्त्रेशान् ॥
तत्राष्टौ मण्डलिनः क्रोधाद्यास्तत्समाश्च वीरेशः ।
श्रीकण्ठः शतरुद्राः शतमित्यष्टादशाभ्यधिकम् ॥ इति ।

तत्परिपाकाधिक्यनिरोधेन शक्त्युपसंहारेण दीक्षाकरणेन मोक्षप्रदो भवत्याचार्यमूर्तिमास्थाय परमेश्वरः । तदप्युक्तम्—

परिपक्वमलानेतानुत्सादनहेतुशक्तिपातेन ।
योजयति परे तत्त्वे स दीक्षयाऽऽचार्यमूर्तिस्थः ॥ इति ।

श्रीमन्मृगेन्द्रेऽपि—

पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति इति ।

व्याकृतं च नारायणकण्ठेन तत्सर्वं तत एवावधार्यम् । अस्माभिस्तु विस्तरभिया न प्रस्तूयते । अपक्वकलुषान्बद्धानणून्भोगभाजो विधत्ते परमेश्वरः कर्मवशात् । तदप्युक्तम्—

बद्धाञ्शेषानपरान्विनियुङ्क्ते भोगभुक्तये पुंसः ।
तत्कर्मणामनुगमादित्येवं कीर्तिताः पशवः ॥ इति ।

अथ पाशपदार्थः कथ्यते । पाशश्चतुर्विधः । मलकर्ममायारोधशक्तिभेदात् ।

ननु—शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात्त्रितयम् ।
तत्र पतिः शिव उक्तः पशवो ह्यणवोऽर्थपञ्चकं पाशाः ॥

इति पाशः पञ्चविधः कथ्यते तत्कथं चतुर्विध इति गण्यते । उच्यते—बिन्दोर्मायात्मनःशिवतत्त्वपदवेदनीयस्य शिवपदप्राप्तिलक्षणपरममुक्त्य-

---

१ क. ख. ग. कारणेन । २ क. ख. ग. घ. °श्चककञ्चुका° । ३ क. ग. °त्व मन्त्र म° । ४ ग. कांश्चि° । ५ ख. महेश्वर । ६ क. ग. °शतम° । ७ घ. शतरुद्रः । ८ ङ. °नश° । ९ क. ग. घ. कीर्त्यते ।

पेक्षया पाशत्वेऽपि तद्योगस्य विद्येश्वरादिपद[1]प्राप्तिहेतुत्वेनापरमुक्तित्वात्पाशत्वेनानुपादानमित्यविरोधः । अत एवोक्तं तत्त्वप्रकाशे—पाशाश्चतुर्विधाः स्युरिति—

श्रीमन्मृगेन्द्रेऽपि—

प्रावृतीशौ[2] बलं[3] कर्म मायाकार्यं चतुर्विधम् ।
पाशजालं[4] समासेन धर्मनाम्नैव कीर्तिताः[5] ॥ इति ।

अस्यार्थः—प्रावृणोति प्रकर्षेणाऽऽच्छादयत्यात्मनो दृक्क्रिये इति प्रावृतिः[6] स्वाभाविक्यशुचिर्मलः स च ईष्टे स्वातन्त्र्येणेति ईशः ।

तदुक्तम्—

एको ह्यनेकशक्तिर्दृक्क्रिययोच्छेदको[7] मलः पुंसः ।
तुषतण्डुलवज्ज्ञेयस्ताम्राश्रितकालिकावद्वा ॥ इति ।

बलं रोधशक्तिः । अस्याः शिवशक्तेः पाशाधिष्ठानेन पुरुषतिरोधायकत्वादुपचारेण पाशत्वम् । तदुक्तम्[8]—

तासामहं वरा शक्तिः सर्वानुग्राहिका शिवा ।
धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥ इति ।

क्रियते[9] फलार्थिभिरिति कर्म धर्माधर्मात्मकं[10] बीजाङ्कुरवत्प्रवाहरूपेणानादि । यथोक्तं श्रीमत्किरणे[11]—

यथाऽनादिर्मलस्तस्य कर्माल्पकमनादिकम् ।
यद्यनादिरसं[12] सिद्धं वैचित्र्यं केन हेतुना ॥ इति ।

मात्यस्यां[13] शक्त्यात्मना प्रलये सर्वं जगत्सृष्टौ व्यक्तिमायातीति माया । यथोक्तं श्रीमत्सौरभेये—

शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये ।
विकृतौ व्यक्तिमायान्ति[13] सा कार्येण कलादिना ॥ इति ।

यद्यप्यत्र बहु वक्तव्यमस्ति तथाऽपि ग्रन्थभूयस्त्वभयादुपरम्यते । तदित्थं पतिपशुपाशपदार्थास्त्रयः प्रदर्शिताः[14]—

पतिविद्ये तथा विद्या पशुः पाशश्च कारणम् ।
तन्निवृत्ताविति प्रोक्ताः पदार्थाः षट् समासतः ॥

---

१ ग. °पदाप्रा° । २ क. ख. °तीशोब° । च. °तीशबलेक° । ३ क. बले° । ४ ग. जाल स° । ५ घ. °र्तितम् । इ° । ६ घ. °वृत्तिः । स्वा° । ७ ग. °योछाद° । ८ च. °म् । तस्मान्माहेश्वरी शक्तिः । ९ ख. घ. क्रियाफ° । १० घ. °र्मात्म° । ११ क. ख. °मत्करणे । १२ च. °दिनसं । च. °त्यस्य श° । १३ ख. घ. यान्तिसा । १४ क. ख. ग. प्रादशिषत ।

इत्यादिना प्रकारान्तरं ज्ञानरत्नावल्यादौ प्रसिद्धम् ।
सर्वं तत एवावगन्तव्यमिति सर्वं समञ्जसम् ॥

इति सर्वदर्शनसंग्रहे शैवदर्शनम् ।

---

## अथ प्रत्यभिज्ञादर्शनम् ॥ ८ ॥

---

अत्रापेक्षाविहीनानां जडानां कारणत्वं दुष्यतीत्यपरितुष्यन्तो मतान्तरमन्विष्यन्तः परमेश्वरेच्छावशादेव जगन्निर्माणं परिघुष्यन्तः स्वसंवेदनोपपत्त्याऽऽगमसिद्धप्रत्यगात्मतादात्म्ये नानाविधमानमेयादिभेदाभेदशालिपरमेश्वरोऽनन्यमुखप्रेक्षित्वलक्षणस्वातन्त्र्यभाक्स्वात्मदर्पणे भावान्प्रतिबिम्बवदवभासयदिति भणन्तो बाह्याभ्यन्तरचर्याप्राणायामादिक्लेशप्रयासकलवैधुर्येण सर्वसुलभमभिनवं प्रत्यभिज्ञामात्रं परापरसिद्ध्युपायमभ्युपगच्छन्तः परे माहेश्वराः प्रत्यभिज्ञाशास्त्रमभ्यस्यन्ति । तस्येयत्ताऽपि न्यरूपि परीक्षकैः—

सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ ।
प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः ॥

तत्रेदं प्रथमं सूत्रम्—

कथंचिदासाद्य महेश्वरः स्या-
द्दास्यं जनस्याप्युपकारमिच्छन् ।
समस्तसंपत्समवाप्तिहेतुं
तत्प्रत्यभिज्ञामुपपादयामि ॥ इति ।

कथंचिदिति परमेश्वराभिन्नगुरुचरणारविन्दयुगलसमाराधनेन परमेश्वरघटितेनैवेत्यर्थः । आसाद्येति आ समन्तात्परिपूर्णतया सादयित्वा स्वात्मोपभोग्यतां निरर्गलां गमयित्वा तदनेन विदितवेद्यत्वेन परार्थशास्त्रकरणेऽधिकारो दर्शितः । अन्यथा प्रतारणमेव प्रसजेत् । मायोत्तीर्णा अपि महामायाधिकृता विष्णुविरिञ्च्याद्या यदीयैश्वर्यलेशेनेश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः । तस्य

---

१ क. °रो नान्य° । २ च. वान्प्रति° । ३ घ. लापवै° । ४ घ. °मभ्यासते । त° । ५ क. ग. °स्यन्त त° । ख. °स्यन्तः त° । ६ ग. °भिन्नागु° । ७ क. स्वात्मीयभो° । ८ क. ग. प्रसज्येत । घ. प्रसज्जेत° ।

दास्यं दीयतेऽस्मै स्वामिना सर्वं यथाभिलषितमिति दासः परमेश्वरस्वरूपस्वातन्त्र्यपात्रमित्यर्थः। जनशब्देनाधिकारिविषयनियमाभावः प्रादर्शि, यस्य यस्य हीदं स्वरूपकथनं तस्य तस्य महाफलं भवति प्रधानस्यैव परमार्थफलत्वात्। तथोपदिष्टं शिवदृष्टौ परमगुरुभिर्भगवत्सोमानन्दनाथपादैः—

> एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः।
> ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना॥
> करणेन नास्ति कृत्यं क्वापि भावनया[3] सकृत्।
> ज्ञाते सुवर्णे[4] करणं भावनां[5] वा परित्यजेत्॥ इति।

अपिशब्देन स्वात्मनस्तदभिन्नतामाविष्कुर्वता पूर्णत्वेन स्वात्मनि परार्थसंपत्त्यतिरिक्तप्रयोजनान्तरावकाशश्च पराकृतः। परार्थश्च प्रयोजनं भवत्येव तल्लक्षणयोगात्, न ह्ययं देवशापः स्वार्थ एव प्रयोजनं न परार्थ इति। अत एवोक्तमक्षपादेन—यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनमिति। उपशब्दः सामीप्यार्थः, तेन जनस्य परमेश्वरसमीपताकरणमात्रं फलम्। अत एवाऽऽह समस्तेति, परमेश्वरतालाभे हि सर्वाः संपदस्तन्निष्पन्दमय्यः संपन्ना एव रोहणाचललाभे रत्नसंपद इव। एवं परमेश्वरतालाभे किमन्यत्प्रार्थनीयम्। तदुक्तमुत्पलाचार्यैः—

> भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम्।
> एतया[10] वा दरिद्राणां किमन्यदुपयाचितम्॥ इति।

इत्थं षष्ठीसमासपक्षे प्रयोजनं निर्दिष्टम्। बहुव्रीहिपक्षे तूपायः[11] समस्तस्य बाह्याभ्यन्तरस्य नित्या[12] सुखादेर्या संपात्तिसिद्धिः, तथात्वप्रकाशः[13], तस्याः सम्यगवाप्तिर्यस्याः प्रत्यभिज्ञाया हेतुः सा तथोक्ता, तस्य महेश्वरस्य प्रत्यभिज्ञा प्रतिमाभिमुख्येन[14] ज्ञानम्। लोके हि स एवायं चैत्र इति प्रतिसंधानेनाभिमुखीभूते वस्तुनि ज्ञानं प्रत्यभिज्ञेति व्यवह्रियते, इहापि प्रसिद्धपुराणसिद्धागमानुमानादिज्ञातपरिपूर्णशक्तिके[15][16]

---

१ क. ख. दास्याद्दीय°। २ च. °भट्टसो°। ३ च. °याऽपि वा। स°। ४ च. °र्णमा क°। ५ ख. °वनापि व्रजेत्। इ°। घ. °वनापि व्रजेदिति। ६ च. °नां व्रजे। ७ च. °रधर्मसमीपः श्वर°। ८ क. ग. पदः। ए°। ९ घ. °व। प°। १० ग. एतया। च. अनया। ११ घ. तूपपादयामः। स°। १२ क. नीतिसु°। ख. घ. च. नित्यमु°। ग. नीतसु°। १३ ख. घ. °तत्वप्र°। १४ घ. °तिआभि°। च. °तिपाभि°। १५ च. °द्धान्तागमानादिपरिज्ञा°। १६ क. ख. °दि परिज्ञा°। ग. °दि परिज्ञातं प°। घ. °दिपरिज्ञाते प°।

परमेश्वरे सति स्वात्मन्यभिमुखीभूते तच्छक्तिप्रतिसंधानेन ज्ञानमुदेति नूनं स एवेश्वरोऽहमिति। तामेनां[1] प्रत्यभिज्ञामुपपादयामि, उपपत्तिः संभवः संभवंतीति[2] *तत्समर्थाचरणेन प्रयोजन[3]व्यापारेण संपादयामीत्यर्थः। यदीश्वरस्वभाव एवाऽऽत्मा प्रकाशते तर्हि किमनेन प्रत्यभिज्ञाप्रदर्शनप्रयासेनेति चेत्तत्रायं समाधिः—स्वप्रकाशतया सततमवभासमानेऽप्यात्मनि मायावशाद्भागेन प्रकाशने पूर्णतावभाससिद्धये दृक्क्रियात्मकशक्त्याविष्करणेन प्रत्यभिज्ञा प्रदर्श्यते। तथा च प्रयोगः—अयमात्मा परमेश्वरो भवितुमर्हति ज्ञानक्रियाशक्तिमत्त्वाद्यो यावति ज्ञाता कर्ता च स तावतीश्वरः प्रसिद्धेश्वरवद्राजवद्वाऽऽत्मा च विश्वज्ञाता कर्ता च तस्मादीश्वरोऽयमिति अवयवपञ्चकस्याऽऽश्रयणं मायावादेन नैयायिक[10]मतस्य कक्षीका[11]रात्। तदुक्तमुदय[12]करसूनुना—

कर्तारि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
[13]अजडात्मा निषेधं वा +सिद्धिं वा विदधीत कः॥
किंतु मोहवशादस्मिन्दृष्टेऽप्यनुपलक्षिते।
शक्त्याविष्करणेनेयं प्रत्यभि[14]ज्ञोपदर्श्यते॥

तथा हि—सर्वेषामिह भूतानां प्रतिष्ठा ×जीवदा[15]श्रया।
ज्ञानं क्रिया च भूतानां जीवतां जीव[16]नं मतम्॥
तत्र ज्ञानं स्वतः सिद्धं क्रियां[17] ⁺|काश्याश्रिता सती।
= परैरप्युपलक्ष्येत [18]तयाऽन्यज्ज्ञानमुच्यते॥ इति।
या चैषां प्रतिभा तत्तत्पदार्थक्रमरू[19]पिता।
अक्रमानन्दचिद्रूपः प्रमाता स महेश्वरः॥ इति च।

---

* तत्समर्थाचरणेनेत्यस्य विवरणं प्रयोजनेति। प्रयोजनयुक्तव्यापारः प्रयोजनव्यापारः सफलानुष्ठानेनेत्यर्थः। घ. पु. टि। + तस्य पञ्चावयवानुमानस्य कक्षीकरणादङ्गीकारात्। × जडतासिद्धिम्। ⁺| जीवतामाश्रयो जीवदाश्रयः। घ. पु. टि.। = काश्याश्रिता प्रकाशाश्रितासती वर्तते। घ. पु. टि.। † तयापरैरपि आत्मोपलक्ष्येत तस्याः। घ. पु. टि.।

---

१ घ. ङ. °मेतां प्र°। २ क. ग. °वन्तीति°। ३ च. प्रत्यभिज्ञान्या°। ४ ख. °शमाने। ५ क. ख. °सनासि। ६ ख. °त्मश°। ७ ख. °रः प्रासिद्धः प्र°। ८ क. ग. °श्वत्रज्ञा°। ख. घ. °श्वस्य ज्ञा°। ९ क. ख. °यावदेव नै°। १० ख. °कवत्तस्य। च. °कपदस्य। ११ घ. †°क्षीकरणात्। त°। १२ क. ख. ग. °दयाक°। १३ च. अयमात्मा°। १४ ख. °भिज्ञा प्रदर्शते। घ. °भिज्ञाप्रद। १५ घ. °श्रयः। ज्ञा°। १६ च °वनिर्मित°। १७ च. °याकार्याश्रयास°। १८ ख. तथान्य°। १९ क. ख. घ. रूषिता।

सोमानन्दनाथपादैरपि—

सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना[1] इत्यादि ।

ज्ञानाधिकारपरिसमाप्तावपि—

तदैक्येन विना नास्ति संविदां लोकपद्धतिः ।
प्रकाशैक्यात्तदेकत्वं मातैकः स इति स्थितः[2] ॥
स एवार्थमृशत्वेन[3] नियतेन महेश्वरः ।
विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः ॥ इति ।

विवृतं चाभिनवगुप्तार्यैः[4]—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्या[5] प्रकाशचिद्रूपमहिम्ना सर्वस्य भावजातस्य भासकत्वमभ्युपेयते, ततश्च विषयप्रकाशस्य नीलप्रकाशः पीतप्रकाश इति विषयोपरागभेदाद्भेदः । वस्तुतस्तु देशकालाकारसंकोचवैकल्यादभेद एव स एव चैतन्यरूपः प्रकाशः प्रमातेत्युच्यते । तथा च पठितं शिवसूत्रेषु—चैतन्यमात्मेति । तस्य[6] चिद्रूपत्वमनवच्छिन्नविमर्शत्वमनन्योन्मुखत्वमानन्दैकघनत्वं[7] माहेश्वर्यमिति पर्यायः स एव[8] ह्ययं[9] भावात्मा विमर्शः शुद्धे पारमार्थिक्यौ ज्ञानक्रिये तत्र प्रकाशरूपता ज्ञानं, स्वतो जगन्निर्मातृत्वं क्रिया । तच्च निरूपितं क्रियाधिकारे—

एष चाऽऽनन्दशक्तित्वादेवमाभासयत्यमून् ।
भावानिच्छावशादेषां क्रियानिर्मातृतोऽस्य[10] सा ॥ इति ।

उपसंहारेऽपि—

इत्थं तथा घटपटाद्याकारजगदात्मना ।
तिष्ठासोरेवमिच्छैव हेतुकर्तृकृता क्रिया ॥ इति ।
तस्मिन्सतीदमस्तीति कार्यकारणताऽपि या ।
साऽप्यपेक्षाविहीनानां जडानां नोपपद्यते ॥

इति न्यायेन यतो जडस्य न कारणता न वाऽनीश्वरस्य चेतनस्यापि तस्मात्तेन[11] तेन जगद्गतजन्मस्थित्यादिभावविकारतत्तद्भेदक्रियासहस्ररूपेण स्थातुमिच्छोः स्वतन्त्रस्य भगवतो महेश्वरस्येच्छैवोत्तरोत्तर-

---

१ घ. महात्मना । २ ख. स्थितिः । ३ क. ख. घ. °वाथभृ° । °वावभृ° । च. °वविभृ° । ४ क. ख. ग. घ. °प्ताचार्यैः । ५ क. ख. ग. °त्या च प्र° । ६ च. स्यविमर्शरूप । ७ च °त्वसुखत्वमा° । ८ ख. एवाहं भा° । ग. एवह्येह भा° । ९ क. घ. ह्यहं भा° । १० क. ग. घ. ङ °ततास्य सा । इति । च. °तृतास्यते । ७° । ११ ख. °न ज° ।

मुच्छूनस्वभावा क्रिया विश्वकर्तृत्वं वोच्यत इति। इच्छामात्रेण जगन्निर्माणमित्यत्र दृष्टान्तोऽपि स्पष्टं निर्दिष्टः—

योगिनामपि मृद्बीजे विनैवेच्छावशेन यत्।
घटादि जायते तत्तत्स्थिरस्वार्थक्रियाकरम्॥ इति।

यदि घटादिकं प्रति मृदाद्येव परमार्थतः कारणं स्यात्तर्हि कथं योगीच्छामात्रेण घटादिजन्म स्यात्। अथोच्येतान्य एव मृद्बीजादिजन्या घटाङ्कुरादयो योगीच्छाजन्यां[3]स्त्वन्या एवेति तत्रापि बोध्यसे सामग्रीभेदात्तावत्कार्यभेद इति सर्वजनप्रसिद्धम्। ये तु वर्णयन्ति नोपादानं विना घटाद्युत्पत्तिरिति योगी त्विं[4]च्छया परमाणून्व्यापारयन्संघटयतीति तेऽपि बोधनीयाः—यदि परिदृष्टकार्यकारणभावविपर्ययो न लभ्येत तर्हि घटे मृद्दण्डचक्रादिदेहे स्त्रीपुरुषसंयोगादि सर्वमपेक्ष्येत तथा च योगीच्छासमनन्तरसंजातघटदेहादिसंभवो दुःसमर्थ एव स्याच्चेतन एव तु तथा भाति भगवान्भूरिभगो महादेवो नियत्यनुवर्तनोल्लङ्घनघनतरस्वातन्त्र्य इति पक्षे न काचिदनुपपत्तिः। अत एवोक्तं वसुगुप्ताचार्यैः—

निरुपादानसंभार[11]मभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कला[12]श्लाघ्याय शूलिने॥ इति।

ननु प्रत्यगात्मनः परमेश्वराभिन्नत्वे संसारसंबन्धः कथं भवेदिति चेत्तत्रोक्तमागमाधिकारे—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः।
विद्या[13]दिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते॥ इति।

ननु प्रमेयस्य प्रमात्रभिन्नत्वे [14]बन्धमुक्त्यो[15]ः प्रमेयं प्रति को विशेषः। अत्राप्युत्तरमुक्तं तत्त्वार्थसंग्रहाधिकारे—

मेयं साधारणं मुक्तः स्वात्माभेदेन [16]मन्यते।
महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत्॥ इति।

---

१ घ. °भावक्रिया। २ च. °स्वात्मक्रियात्मकमिति। ३ क ख. ग. घ. °स्त्वन्य ए°। च. °न्वास्तदन्या। ४ ख. °त्विच्छाप°। ५ च. °दृश्यका°। ६ च. °ति भर्गो भूरिभाग इति भर्गो म°। ७ ख. भागो। ८ ख. °यन्त्यानु°। ९ घ. °तंनमुल्लङ्घ्य घ°। १० घ. °रस्वाभि°। ११ ख. °मसितावेयत°। १२ क. ख. ग. घ. °लानाथाय। १३ च. विज्ञानज्ञा°। १४ ख. बद्धमु°। १५ ख. °यो: को°। १६ ख. मुच्यते।

नन्वात्मनः परमेश्वरत्वं स्वाभाविकं चेन्नार्थः प्रत्यभिज्ञा[1]प्रार्थनया न हि बीजमप्रत्यभिज्ञातं[2] सति सहकारिसाकल्येऽङ्कुरं नोत्पादयति, तस्मात्कस्माद्वाऽऽत्मप्रत्यभिज्ञाने निर्बन्ध[3] इति चेदुच्यते—शृणु तावदिदं रहस्यं, द्विविधा ह्यर्थक्रिया बाह्याङ्कुरादिका प्रमातृविश्रान्तिचमत्कारसारा प्रीत्यादिरूपा च तत्राऽऽद्या प्रत्यभिज्ञानं नापेक्षते, द्वितीया तु तदपेक्षत एव । इहाप्यहमीश्वर इत्येवंभूतचमत्कारसारा परापरसिद्धिलक्षणजीवात्मैकत्वशक्तिविभूतिरूपार्थक्रियेति स्वरूपप्रत्यभिज्ञानमपेक्षणीयम् । ननु प्रमातृविश्रान्तिसारार्थक्रिया प्रत्यभिज्ञानेन विना दृष्टा[4] सती तस्मिन्दृष्टेति क्व दृष्टम् । अत्रोच्यते नायकगुण[5]गणसंश्रवणप्रवृद्धानुरागा काचन कामिनी मदनविह्वला विरहक्लेशमसहमाना मदनलेखावलम्बनेन स्वावस्थानिवेदनानि विधत्ते, तथा वेगात्तन्निकटमर्त्[6]यपि तस्मिन्नवलोकितेऽपि[7] तदवलोकनं तदीयगुणपरामर्शाभावे जनसाधारणत्वं प्राप्ते हृदयंगमभावं[8] न लभते । यदा तु[9] + मूर्तिवचना[10]त्तदीयगुणपरामर्शं करोति तदा तत्क्षणमेव पूर्णभावमभ्येति[11] । एवं स्वात्मनि विश्वेश्वरात्मना भासमानेऽपि तन्निर्भासनं तदीयगुणपरामर्शविरहसमये पूर्णभावं न संपादयति यदा तु गुरुवचनादिना सर्वज्ञ[12]त्वसर्वकर्तृत्वादिलक्षणपरमेश्वरोत्कर्षपरामर्शो जायते तदा तत्क्षणमेव पूर्णात्मता[13]लाभः[14] । तदुक्तं चतुर्थे विमर्शे—

> तैस्तैरप्युपयाचितैरुपनत[15]स्तस्याः स्थितोऽप्यन्तिके
> कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।
> लोकस्यैष तथाऽनपेक्षितगुणः स्वात्माऽपि विश्वेश्वरो
> [16]नैवायं निजवैभवाय तदिदं[17] तत्प्रत्यभिज्ञोदिता ॥ इति ।

अभिनवगुप्तादिभिराचार्यैर्विहितप्रतानोऽपि अयमर्थः[18] संग्रहमुपक्रममाणैरस्माभिर्विस्तरभिया न प्रतानित इति सर्वं शिवम् ।

इति सर्वदर्शनसंग्रहे प्रत्यभिज्ञा[19]दर्शनम् ।

---

+ निकटवर्तिसख्यादिवचनादि वा । घ. पु. टि. ।

---

१ ख. °ज्ञा प्रथमया° । २ ख. °ज्ञाते स° । ३ क. बंन्धन इ° । ग. निबन्धनं इ° । ४ ख. °ष्टा सा त° । ५ ख. °ण सं° । ६ क. घ. °टन्त्यपि । ७ क. °पि तदी° । ख. °पि ते तद° । घ. °पि तमलो° । ८ ख. घ °वं ल° । ९ च. तु दृतीव° । १० क. ख. ग. घ. °नादिना तदी° । ११ घ. °मभ्येति । १२ क. ख. ग. घ. °ज्ञ स° । १३ घ. पूर्णता° । १४ च. °ताभावः । त° । १५ ख. °नतं तस्याः । १६ क. ख. ग. घ. नैत्रायं° । १७ च. °दिदं त° । १८ क. °मर्थं स° । १९ क. घ. °भिज्ञानद° ।

## अथ रसेश्वरदर्शनम् ॥ ९ ॥

अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्ये सर्वाभिमता जीवन्मुक्तिः सेत्स्यतीत्यास्थाय पिण्डस्थैर्योपायं पारदादिपदवेदनीयं रसमेव संगिरन्ते । रसस्य पारदत्वं संसारपरपारप्रापणहेतुत्वेन । तदुक्तम्—

संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः ॥ इति ।

रसार्णवेऽपि—

पारदो गदितो यस्मात्परार्थं साधकोत्तमैः ।<br>
सुप्तोऽयं मत्समो देवि मम प्रत्यङ्गसंभवः ॥<br>
मम देहरसो यस्माद्रसस्तेनायमुच्यते ॥ इति ।

प्रकारान्तरेणापि जीवन्मुक्तियुक्तौ नेयं वाचोयुक्तिर्युक्तिमतीति चेन्न षट्स्वपि दर्शनेषु देहपातानन्तरं मुक्तेरुक्ततया तत्र विश्वासानुपपत्त्या निर्विचिकित्सप्रवृत्तेरनुपपत्तेः । तदप्युक्तं तत्रैव—

षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने ।<br>
करामलकवत्साऽपि प्रत्यक्षा नोपलभ्यते ।<br>
तस्मात्तं रक्षयेत्पिण्डं रसैश्चैव रसायनैः ॥ इति ।

गोविन्दभगवत्पादाचार्यैरपि—

इति धनशरीरभोगान्मत्वा नित्यान्सदैव यतनीयम् ।<br>
मुक्तौ सा च ज्ञानात्तच्चाभ्यासात्स च स्थिरे देहे ॥ इति ।

ननु विनश्वरतया दृश्यमानस्य देहस्य कथं नित्यत्वमवसीयत इति चेन्मैवं मंस्थाः षाट्कौशिकस्य शरीरस्यानित्यत्वेऽपि रसाभ्रकपदाभिलप्यहरगौरीसृष्टिजातस्य नित्यत्वोपपत्तेः ।

तथा च रसहृदये—

ये चात्यक्तशरीरा हरगौरीसृष्टिजान्तरं प्राप्ताः ।<br>
वन्द्यास्ते रससिद्धा मन्त्रगणः किंकरो येषाम् ॥ इति ।

तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं दिव्यतनुर्विधेया । हरगौरीसृष्टिसंयोगजनितत्वं च रसस्य हरजत्वेनाभ्रकस्य गौरीसंभवत्वेन तत्तदात्मकत्वमुक्तम्—

---

१ घ. °पायपा° । २ घ. °प्ताः । बन्धास्ते । ३ घ. मुक्तास्ते । ४ घ. °ष्टिजान्तरत्वं हरगौरीसंयोगजनितत्वं र° । ५ च. °योऽमीवसिष्ठाद्या ।

अभ्रकस्तव बीजं तु मम बीजं तु पारदः ।
अनयोर्मेलनं देवि मृत्युदारिद्र्यनाशनम् ॥ इति ।

अत्यल्पमिदमुच्यते, देवदैत्यमुनिमानवादिषु बहवो रससामर्थ्याद्दिव्यं देहमाश्रित्य जीवन्मुक्तिमाश्रिताः श्रूयन्ते रसेश्वरसिद्धान्ते—

देवाः केचिन्महेशाद्या दैत्याः काव्यपुरःसराः ।
मुनयो वालखिल्याद्या नृपाः सोमेश्वरादयः ॥
गोविन्दभगवत्पादाचार्यो गोविन्दनायकः ।
चर्वटिः कपिलो व्यालिः कापालिः कन्दलायनः ॥
एतेऽन्ये बहवः सिद्धा जीवन्मुक्ताश्चरन्ति हि ।
तनुं रसमयीमाप्य तदात्मककथाचणाः ॥ इति ।

अयमेवोस्यार्थः परमेश्वरेण परमेश्वरीं प्रति प्रपञ्चितः—

कर्मयोगेण देवेशि प्राप्यते पिण्डधारणम् ।
रसश्च पवनश्चेति कर्मयोगो द्विधा स्मृतः ॥
मूर्छितो हरति व्याधीन्मृतो जीवयति स्वयम् ।
बद्धः खेचरतां कुर्याद्रसो वायुश्च भैरवि ॥ इति ।

मूर्छितस्वरूपमप्युक्तम्—

नानावर्णो भवेत्सूतो विहाय घनचापलम् ।
लक्षणं दृश्यते यस्य मूर्छितं तं वदन्ति हि ॥
आर्द्रत्वं च घनत्वं च तेजो गौरवचापलम् ।
यस्यैतानि न दृश्यन्ते तं विद्यान्मृतसूतकम् ॥ इति ।

अन्यत्र बद्धस्वरूपमप्यभ्यधायि—

अक्षतश्च लघुद्रावी तेजस्वी निर्मलो गुरुः ।
स्फोटनं पुनरावृत्तौ बद्धसूतस्य लक्षणम् ॥ इति ।

ननु हरगौरीसृष्टिसिद्धौ पिण्डस्थैर्यमाँस्थातुं पार्यते तात्सिद्धिरेव कथमिति चेन्न, अष्टादशसंस्कारवशात्तदुपपत्तेः । तदुक्तमाचार्यैः—

तस्य हि साधनविधौ सुधियां प्रतिकर्मनिर्मलाः प्रथमम् ।
अष्टादश संस्कारा विज्ञातव्याः प्रयत्नेन ॥ इति ।

---

१ च. °योऽसी वसिष्ठाद्या । २ च. पर्पटिः । ३ च. कपालिः । ४ घ. °मयीं प्राप्य तपात्मानोऽथचारणाः । इ° । ५ घ. °वार्थः । ६ क. ख. तस्य । ७ च. °माख्यातुं° । ८ घ. °मलः प्रथमः । अ° ।

तेच संस्कारा निरूपिताः—

स्वेदनमर्दनमूर्छनस्थापनपातननिरोधनियमाश्च ।
दीपनगगनग्रासप्रमाणमथ जारणा पिधानम् ॥
गर्भद्रुतिबाह्यद्रुतिक्षारणसरागसारणाश्चैव ।
क्रामणवेधौ भक्षणमष्टादशधेति रसकर्म ॥ इति ।

तत्प्रपञ्चस्तु गोविन्दभगवत्पादाचार्यसर्वज्ञरामेश्वरभट्टारकप्रभृतिभिः प्राचीनैराचार्यैर्निरूपित इति ग्रन्थभूयस्त्वभयादुदास्यते ।

न च रसशास्त्रं धातुवादार्थमेवेति मन्तव्यं देहवेधद्वारा मुक्तेरेव परमप्रयोजनत्वात् । तदुक्तं रसार्णवे—

लोहवेधस्त्वया देव यद्दत्तं परमीशितः ।
तं देहवेधमाचक्ष्व येन स्यात्खेचरी गतिः ॥
यथा लोहे तथा देहे कर्तव्यः सूतकः सता ।
समानं कुरुते देवि प्रत्ययं देहलोहयोः ।
पूर्वं लोहे परीक्षेत पश्चाद्देहे प्रयोजयेत् ॥ इति ।

ननु सच्चिदानन्दात्मकपरतत्त्वस्फुरणादेव मुक्तिसिद्धौ किमनेन दिव्यदेहसंपादनप्रयासेनेति चेत्तदेतदवार्तं वार्तंशरीरालाभे तद्वार्ताया अयोगात् ।

तदुक्तं रसहृदये—

गलितानल्पविकल्पः सर्वाध्वविवर्जितश्चिदानन्दः ।
स्फुरितोऽप्यस्फुरिततनोः करोति किं जन्तुवर्गस्य ॥ इति ।
यं जरया जर्जरितं कासश्वासादिदुःखविशदं च ।
योग्यं तं न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् ॥
बालः षोडशवर्षो विषयरसास्वादलम्पटः परतः ।
यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिम् ॥ इति ।

ननु जीवत्वं नाम संसारित्वं तद्विपरीतत्वं मुक्तत्वं, तथा च परस्परविरुद्धयोः कथमेकायतनत्वमुपपन्नं स्यादिति चेत्तदनुपपन्नं विकल्पानुपपत्तेः । मुक्तिस्तावत्सर्वतीर्थकरसंमता, सा किं ज्ञेयपदे निविशते न वा

---

१ क. तत्र तदुक्तमाचार्यैः । तस्य हि स्वे° । २ क. °गर्भे द्रु° । ३ क. ख. घ. °गक्षार° ।
४ घ. °यद्दत्तः प° । च. यदर्थमुपवर्णितः । ५ क. सताम् । ६ ख. °लहं दे° । ७ ख. अलाभात् ।
८ घ. °ति । यज्जर° । ९ क. ख. पंजरया । १० घ. कासश्वा° । ११ क. ख. ग. °कायन° ।

चरमे शशविषाणकल्पा स्यात्, प्रथमे[1] न जीवनं[2] वर्जनीयमजीवतो[3] ज्ञातृत्वानुपपत्तेः । तदुक्तं रसेश्वरसिद्धान्ते—

रसाङ्कमेयमार्गोक्तो जीवमोक्षो[4]ऽस्त्यधो[5]मनाः ।
प्रमाणान्तरवादेषु[6] युक्तिभेदावलम्बिषु ।
ज्ञानज्ञेयमिदं विद्धि[7] सर्वमन्त्रेषु[8] संमतम्[9] ।
न जीवञ्ज्ञास्यति[10] ज्ञेयं[11] यदतो[12]ऽस्त्येव[13] जीवनम् ॥ इति ।

न चेदमदृष्टचरमिति मन्तव्यं विष्णुस्वामिमतानुसारिभिर्नृपञ्चास्य[14]शरीरस्य नित्यत्वोपपादनात् ।

तदुक्तं साकारसिद्धौ—

सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम् ।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसंमतम् ॥ इति ।

नन्वेतत्सावयवं रूपवदवभासमानं नृकण्ठीरवाङ्गं सदिति न संगच्छत इत्यादिनाऽऽक्षेपपुरःसरं सनकादिप्रत्यक्षं सहस्रशीर्षा पुरुष इत्यादि[15]श्रुतितमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधमित्यादिपुराणलक्षणेन प्रमाण[16]त्रयेण सिद्धं नृपञ्चाननाङ्गं कथमसत्स्यादिति । सदादीनि विशेषणानि गर्भश्रीकान्तमिश्रैर्विष्णुस्वामिचरणपरिणतान्तःकरणैः प्रतिपादितानि । तस्मादस्मदिष्टदेहनित्यत्वमत्यन्तादृष्टं न भवतीति पुरुषार्थकामुकैः[17] पुरुषैरेष्टव्यम् ।

अत एवोक्तम्—

आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ॥ इति ।

अजरामरीकरणसमर्थश्च रसेन्द्र एव तदाह—

एकोऽसौ रसराजः शरीमजरामरं कुरुते ॥ इति ।

किं वर्ण्यते रसस्य माहात्म्यं दर्शनस्पर्शनादिनाऽपि महत्[18]फलं भवति । तदुक्तं रसार्णवे—

---

१ ख. ग. घ. °मे जीं° । २ ग. °न न्नवर्जनीयमजीविनो ज्ञा° । ३ क. ग. °वनो ज्ञा° । ख. °वने ज्ञा° । ४ घ. °क्षोऽन्यथा तु न । प्र° । ५ ख. स्त्यधर्मनः । क. ग. स्त्यधो मनः । ६ घ. °षु मुक्ति° । ७ ख. सिद्धिस° । ८ घ. च. °र्वतन्त्रे° । ९ क. ख. ग. मू । नाजी° । घ. °मू । नाजीवम° । ज्ञास्यसि ज्ञे° । १० क. °ज्ञास्यसि ज्ञे° । ख. ज्ञास्यविज्ञे । ११ ग. ज्ञेये । १२ ख. प्रद° । १३ क. ख. विद्युस्वा° । १४ घ. °स्यनित्य° । १५ क. ख. °तिमत्तम° । ग. च. °तिः तम° । घ. °तिसंमतं त° । १६ घ. माणेन च सि° । १७ ख. °कामैः पु° । १८ घ. °हृत्पूजितज्योतिर्लिङ्गादिदर्शनादिफ° ।

दर्शनात्स्पर्शनात्तस्य भक्षणात्स्मरणादपि ।
+पूजनाद्रसदानाच्च दृश्यते षड्विधं फलम् ॥
केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित् ।
तानि दृष्ट्वा तु यत्पुण्यं तत्पुण्यं रसदर्शनात् ॥ इत्यादिना ।

अन्यत्रापि—

काश्यादिसर्वलिङ्गेभ्यो रसलिङ्गार्चनं शिवम् ॥ इति ।
प्राप्यते येन तल्लिङ्गं भोगारोग्यामृतप्रदम् ॥ इति ।

रसनिन्दायाः प्रत्यवायोऽपि दर्शितः—

प्रमादाद्रसनिन्दायाः श्रुतावेनं स्मरेत्सुधीः ।
द्राक्त्यजेन्निन्दकं नित्यं निन्दया पूरिताशुभम् ॥ इति ।

तस्मादस्मदुक्तया रीत्या दिव्यं देहं संपाद्य योगाभ्यासवशात्परतत्त्वे दृष्टे पुरुषार्थप्राप्तिर्भवति । तदा—

भ्रूयुगमध्यगतं यच्छिखिविद्युत्सूर्यवज्जगद्भासि ।
केषां चित्पुण्यदृशामुन्मीलति चिन्मयं ज्योतिः ॥
परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम् ।
विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम् ॥
तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत्पश्यन् ।
उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाऽऽप्नोति ॥

श्रुतिश्च—" रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति " इति ।

तादित्थं भवेदन्यैर्दुःखभैरतरणोपायो रस एवेति सिद्धम् । तथा च रसस्य परब्रह्मणा साम्यमिति प्रतिपादकः श्लोकः—

यः स्यात्प्रावरणाविमोचनधियां साध्यः प्रकृत्या पुनः
संपन्नः सहते न दीव्यति परं वैश्वानरे जाग्रति ।
जातो यद्यपरं न वेदयति च स्वस्मात्स्वयं द्योतते
यो ब्रह्मैव स दैन्यसंसृतिभयात्पायादसौ पारदः ॥ इति ।

इति सर्वदर्शनसंग्रहे रसेश्वरदर्शनम् ।

---

+ पूजनाद्धारणाच्चास्य घ. पु. टि. ।

१ क. ख. ग. ॰नि च । २ घ. ॰ङ्गावरा इति । प्रा॰ । ३ घ. ॰चैनाच्छिवः । प्रा॰ । ४ च. तन्नित्यं बोधारो॰ । ५ क. ॰मृतामरम् । इ॰ । ६ क. ग. न्दायां श्रु॰ । ७ क. ग. ॰निरुया । ख. घ. निरया । ८ घ. ॰रमज्यो॰ । ९ ख. स्वयं वे॰ । १० क. ख. ॰बद्धो ब्र॰ । ११ घ. वे दैन्य॰ । १२ ख. ॰न्यभवदु॰ । १३ घ. भवत॰ ।

# अथौलुक्यदर्शनम् ॥ १० ॥

---

इह खलु निखिलप्रेक्षावन्निसर्गप्रतिकूलवेदनीयतया निखिलात्मसंवेदनसिद्धं दुःखं जिहासुस्तद्धानोपायं जिज्ञासुः परमेश्वरसाक्षात्कारमुपायमाकलति ।

> यदा चर्मवदाकाशं वेष्टयन्तीह मानवाः ।
> तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

इत्यादिवचननिचयप्रामाण्यात्परमेश्वरसाक्षात्कारश्च श्रवणमननभावनाभिर्भावनीयः । यदाह—

> आगमेनानुमानेन ध्यानाभ्यासबलेन च ।
> त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ इति ।

तत्र मननमनुमानाधीनम्, अनुमानं च व्याप्तिज्ञानाधीनं व्याप्तिज्ञानं च पदार्थविवेकसापेक्षम् । अतः पदार्थषट्कम्, 'अथातो धर्मं व्याख्यास्यामः' इत्यादिकायां दशलक्षण्यां कणभक्षेण भगवता व्यवस्थापितं तत्राऽऽह्निकद्वयात्मके प्रथमेऽध्याये समवेताशेषपदार्थकथनमकारि । तत्रापि प्रथमाह्निके जातिमन्निरूपणं, द्वितीयाह्निके जातिविशेषयोर्निरूपणम् । आह्निकद्वययुक्ते द्वितीयेऽध्याये द्रव्यनिरूपणं, तत्रापि प्रथमाह्निके भूतविशेषणलक्षणं, द्वितीये दिक्कालप्रतिपादनम् । आह्निकद्वय[11]युक्ते तृतीय आत्मान्तःकरणलक्षणं, तत्राप्यात्मलक्षणं प्रथमे, द्वितीयेऽन्तःकरणलक्षणम् । आह्निकद्वययुक्तचतुर्थे शरीरतदुपयोगिविवेचनं तत्रापि प्रथमे तदुपयोगिविवेचनं द्वितीये शरीरविवेचनम् । आह्निकद्वयवति[13] पञ्चमे कर्मप्रतिपादनं, तत्रापि प्रथमे शरीरसंबन्धिकर्मचिन्तनं द्वितीये मानस[14]कर्मचिन्तनम् । आह्निकद्वयशालिनि षष्ठे श्रौतधर्मनिरूपणं, तत्रापि प्रथमे दानप्रतिग्रहधर्मविवेकः । द्वितीये चातुराश्रम्योचितधर्मनिरूपणम् । तथाविधे सप्तमे गुणसमवायप्रतिपादनं, तत्रापि प्रथमे बुद्धिनिरपेक्षगुणप्रतिपादनं, द्वितीये तत्सापेक्षगुणप्रतिपादनं समवायप्रतिपादनं च । अष्टमे निर्विकल्पकसविक-

---

१ क. ग. घ. °क्षावान्नि° । २ च. °या पर° । ३ क ग. द्धंजि° । ४ क. ग. घ. हासतस्त° । ख. °हासुस्त° । ५ क. ज्ञासो प° । ६ क. ग. घ. माकलयति । ख. °माकर्णयति । ७ क. ग. °नीयम् । य° । ८ क. ग. °गमो ना° । ९घ. ल्पयेत्प्रज्ञां° । १० घ. °म् । आह्निकद्वयात्मके द्वितीयेऽध्याये भूतविशेषदिक्कालप्रतिपादनम् । तत्रा° । ११ ख. घ. °द्वयात्मके तृ° १२ ङ. तथाऽपि । १३ घ. °ये साधरणक° । १४ क. ग. °नसादिक° ।

लपकप्रत्यक्षप्रमाणचिन्तनम् । नवमे बुद्धिविशेषप्रतिपादनम् । दशमेऽनुमानभेदप्रतिपादनम् । तत्रोद्देशो लक्षणं परीक्षा चेति त्रिविधाऽस्य शास्त्रस्य प्रवृत्तिः । ननु विभागापेक्षया चातुर्विध्ये वक्तव्ये कथं त्रैविध्यमुक्तमिति चेन्मैवं मंस्थाः । विभागस्य विशेषो[1]द्देश एवान्तर्भावात् । तत्र द्रव्यगुणकर्मसामान्यविशेषसमवाया इति षडेव ते पदार्था इत्युद्देशः । किमत्र क्रमनियमे कारणम्, उच्यते—समस्तपदा[3]र्थायतनत्वेन प्रधानस्य द्रव्यस्य प्रथममुद्देशोऽनन्तरं गुणत्वोपाधिना सकलद्रव्यवृत्तेर्गुणस्य तदनु सामान्यवत्त्वसाम्यात्कर्मणः पश्चात्त्रितयाश्रितस्य सामान्यस्य तदनन्तरं समवायाधिकरणस्य विशेषस्यान्तेऽवशिष्टस्य समवायस्येति क्रमनियमः । ननु षडेव पदार्था इति कथं कथ्यते, अभावस्यापि सद्भावादिति चेन्मैवं वोचः । नञर्थानुल्लिखितधीविषयतया षडेवेति विवक्षितत्वात् । तथाऽपि कथं षडेवेति नियम उपपद्यते विकल्पानुपपत्तेः । तथाहि नियमव्यवच्छेद्यं प्रमितं न वा, प्रमितत्वे कथं निषेधः । अप्रमितत्वे कथंतरां न हि कश्चित्प्रेक्षावान्मूषिकविषाणं प्रतिषेद्धुं यतते, ततश्चानुपपत्तेर्नो नियम इति चेन्मैवं माषिष्ठाः सप्तमतया प्रमिते *अन्धकारादौ भावत्वस्य भावतया प्रमिते शक्ति[11]संख्यादौ सप्तमत्वस्य च निषेधादिति कृतं विस्तरेण ।

तत्र द्रव्यादित्रितयस्य द्रव्यत्वादिर्जातिर्लक्षणम् । द्रव्यत्वं नाम गगनारविन्दसमवेतत्वे सति नित्यगन्धासमवेतत्वम् । गुणत्वं नाम समवायिकारणा[12]सम[13]वायिकार[14]णभिन्नसमवेतसत्तासाक्षाद्व्याप्यजातिः । कर्मत्वं नाम[15] नित्य[16]समवेतत्व[17]सहितसत्तासाक्षाद्व्याप्यजातिः । सामान्यं तु प्रध्वंसप्रतियोगित्वरहितमनेकसमवेतम् । विशेषो नामान्योन्याभावविरोधिसामान्यरहितः समवेतः । समवायस्तु समवायरहितः संबन्ध इति षण्णां लक्षणानि व्यवस्थितानि ।

---

* सप्तमभावपदार्थमाशङ्क्य निराकरोति अन्धकारादावित्यादि ।

---

१ क. ख. ग. °षो द्देशरूपत्वोद्देश° । घ. षोद्देशरूपत्वदुद्देश । च. °षोद्देशरूपत्वेनोद्देश° । २ घ. ङ. °याभावा इ° । ३ क. °दा र्थोपपतनत्वेन । ख. °दार्थायतत्वेन । ४ ख. साधर्म्यात्क° । ५ ख. °ति । न° । ६ क. चः । तत्रार्था° । घ. °चः । तत्रार्थोल्लि° । ७ क. ख. ग. घ. °या भावरूपतया ष° । ८ ख. ग. यतेत । ९ घ. °त्तेर्न नि° । १० घ. °त्वस्याभा° । ११ घ. °क्तिसादृश्यादौ । १२ च. °रणसमवे° । १३ घ. °मवेतासमवायिकारणसम° । १४ क. °रणास° । ग. °रणस° । १५ च. नामानि । १६ ग. घ. नित्यास° । १७ च. °त्वरहि° ।

द्रव्यं नवविधं पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति । तत्र पृथिव्यादिचतुष्टयस्य पृथिवीत्वादिजातिर्लक्षणम् । पृथिवीत्वं नाम पाकजरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः । अप्त्वं नाम सरित्सागरसमवेतत्वे सति सलिलसमवेतं सामान्यम् । तेजस्त्वं नाम चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतं सामान्यम् । वायुत्वं नाम त्वगिन्द्रियसमवेतद्रव्यत्वसाक्षाद्व्याप्यजातिः । आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति आकाशः कालो दिगिति । संयोगाजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणमाकाशम् । विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणः कालः । अकालत्वे सत्यविशेषगुणा महती दिक् । आत्ममनसोरात्मत्वमनस्त्वे । आत्मत्वं नामामूर्तसमवेतद्रव्यत्वापरजातिः । मनस्त्वं नाम द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिः । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च कण्ठोक्ताः सप्तदश च शब्दसमुच्चिता गुरुत्वद्रव्यत्वस्नेहसंस्कारा*दृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिर्गुणाः । तत्र रूपादिशब्दान्तानां रूपत्वादिजातिर्लक्षणम् । रूपत्वं नाम नीलसमवेतगुणत्वापरजातिः । अनया दिशा शिष्टानां लक्षणानि द्रष्टव्यानि । कर्म पञ्चविधम्, उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात् । भ्रमणरेचनादीनां गमन एवान्तर्भावः । उत्क्षेपणादीनामुत्क्षेपणत्वादिजातिर्लक्षणम्[10] । तत्रोत्क्षेपणं नामोर्ध्वदेशसंयोगासमवायिकारणे[11]प्रमेयसमवेतकर्मत्वापरजातिः । एवमे[12]वक्षेपणादीनां लक्षणं कर्तव्यम् । सामान्यं द्विविधं परमपरं च, परं सत्ता । द्रव्यगुणे[13]समवेता, गुणकर्म[14]समवेता वा[15], अपरं द्र[16]व्यत्वादितल्लक्षणं प्रागेवोक्तम् । विशेषाणामनन्तत्वात् । समवायस्य चैकत्वा[17]द्विभागो न संभवति । तल्लक्षणं च प्रागेवावादि[18] ।

* अदृष्टं धर्माधर्मौ ।

१ ख. °ति द्रव्य स° । २ क. °ति ज्ञान स° । ख. ति ज्ञानास° । घ. °तिज्वालास° । ३ ग. °तत्वे सति द्र° । ४ ग. °जन्मज° । ५ क. ग. घ. °त्म म° । ६ ख. ग. °मामूर्तास° । ग. °मामूर्त स । ७ ग. °रादृष्ट° । ८ क. ग. घ. °त द्रव्यत्वा° । ९ क. ख. ग. घ. °णापक्षे° । १० ख. °योगस° । ११ क. ख. °ण प्रत्ययस° । ग. घ. °णस° । १२ क. ख. ग. °मपक्षे° । १३ ख. ग. घ. °ण कर्म स° । १४ घ. °मैमात्रस° । १५ क. वाक्यपरं द्र° । १६ क. ग. द्रष्टव्यादि° । १७ ख. ग. °त्वात्तद्वि° । १८ घ. वादीत् द्वि° ।

द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे।
यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥

इति आभाणकस्य सद्भावाद्द्वित्वाद्युत्पत्तिप्रकारः प्रदर्श्यते। तत्र प्रथममिन्द्रियार्थसंनिकर्षस्तस्मादेकत्वसामान्यज्ञानं, ततोऽपेक्षाबुद्धिः, ततो[1] द्वित्वोत्पत्तिस्ततो द्वित्वसामान्यज्ञानं[2] तस्माद्द्वित्वगुणज्ञानं ततः संस्कारः। तदाह-

आदाविन्द्रियसंनिकर्षघटनादेकत्वसामान्यधी-
रेकत्वोभयगोचरा मतिरतो द्वित्वं ततो जायते[3] ।
द्वित्वत्वप्रमितिस्ततो नु परतो[4] द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया ॥ इति ।

द्वित्वादेरपेक्षाबुद्धिजन्यत्वे किं प्रमाणम्, अत्राऽऽहुराचार्याः—अपेक्षाबुद्धिर्द्वित्वादेरुत्पादिका भवितुमर्हति व्यञ्जकत्वानुपपत्तौ[5] तेनानुविधीयमानत्वात्। शब्दं[6] प्रति संयोगवदिति। वयं तु ब्रूमो द्वित्वादिकमेकत्वद्वयविषयानित्यबुद्धिव्यङ्ग्यं न भवति अनेकाश्रितगुणत्वात्पृथक्त्वादिवदिति।

निवृत्तिक्रमो निरूप्यते—अपेक्षाबुद्धित एकत्वसामान्यज्ञानस्य[7] द्वित्वोत्पत्तिसमकालं निवृत्तिः, अपेक्षा बुद्धेर्द्वित्वसामान्यज्ञानाद्द्वित्वगुणबुद्धिसम[8]समयं द्वित्वस्यापेक्षाबुद्धिनिवृत्तेर्द्रव्यबुद्धिसमकाल[9]गुणबुद्धे[10]र्द्रव्यबुद्धितः संस्कारोत्पत्तिसमकालं द्रव्यबुद्धे[11]स्तदनन्तरं संस्कारा[12]दिति। तथा च संग्रहश्लोकाः-

आदावपेक्षाबुद्ध्या हि नश्येदेकत्वजातिधीः।
द्वित्वोदयसमं पश्चात्सा च तज्जातिबुद्धितः ॥
द्वित्वाख्यगुणधीकाले ततो द्वित्वं निवर्तते।
अपेक्षाबुद्धिनाशेन द्रव्यधीजन्मकालतः ॥
द्रव्यबुद्धिर्द्रव्यबुद्ध्या संस्कारोत्पत्तिकालतः।
गुणबुद्धिश्च संस्काराविति नाश[13]क्रमो मतः ॥ इति ।

---

१ क. ख. ग. °तो द्वित्वसा° । २ घ. द्वित्वसामान्यज्ञानमुत्पद्यते । ततो द्वित्वनिर्विकल्पकज्ञानं तस्मा° । ३ च. °ते । एकत्वप्र° । ४ क. °रतौ द्वि° । ५ ङ. च. °पत्तेः । तेना° । ६ क. ख. शवं प्र° । ७ च. °कत्वा सा । ८ घ. °मकालं द्वि° । ९ ख. ग. घ. च. °कालं गु° । १० घ. °बुद्धितः, गुणबुद्धिसं° । ११ घ. °बुद्धितः, द्रव्यबुद्धेस्त° । १२ घ. °रादीति । १३ च. नामक्र° ।

बुद्धेर्बुद्ध्यन्तरविनाश्यत्वे संस्कारविनाश्यत्वे च प्रमाणं विवादाध्यासितानि ज्ञानानि उत्तरोत्तरकार्यविनाश्यानि क्षणिकविभुविशेषगुणत्वात्, शब्दवत् । द्रव्यारम्भकसंयोगप्रतिद्वंद्विविभागजनककर्मसमकालमेकत्वसामान्यचिन्तया, आश्रयनिवृत्तेरेव द्वित्वनिवृत्तिः कर्मसमकालमपेक्षाबुद्धिचिन्तनौ[3]दुभाभ्यामिति संक्षेपः ।

अपेक्षाबुद्धिर्नाम विनाशकविनाशप्रतियोगिनी बुद्धिरिति बोद्धव्यम् ।

अथ द्व्यणुकनाशमारभ्य कतिभिः क्षणैः पुनरन्यद्द्व्यणुकमुत्पद्य रूपादिमद्भवतीति जिज्ञासायामुत्पत्तिप्रकारः कथ्यते—नोदनादिक्रमेण द्व्यणुकनाशः, नष्टे द्व्यणुके परमाणावग्निसंयोगाच्छ्यामादीनां निवृत्तिः, निवृत्तेषु श्यामादिषु पुनरन्यस्मादग्निसंयोगाद्रक्तादीनामुत्पत्तिः, उत्पन्नेषु रक्तादिषु अदृष्टवदात्मसंयोगात्परमाणौ द्रव्यारम्भणाय क्रिया, तया पूर्वदेशाद्विभागः, विभागेन पूर्वदेशसंयोगनिवृत्तिः, तस्मिन्निवृत्ते परमाण्वन्तरेण संयोगोत्पत्तिः, संयुक्ताभ्यां परमाणुभ्यां द्व्यणुकारम्भः, आरब्धे द्व्यणुके कारणगुणादिभ्यः कार्यगुणादीनां रूपादीनामुत्पत्तिरिति यथाक्रमं नव क्षणाः । दशक्षणादिप्रकारान्तरं विस्तरभयान्नेह प्रतन्यते । इत्थं पीलुपाकप्रक्रिया पिठरपाकप्रक्रिया तु नैयायिकधीसंमता ।

विभागजविभागो द्विविधः कारणमात्रविभागजः कारणाकारणविभागजश्च । तत्र प्रथमः कथ्यते—कार्यव्याप्ते कारणे कर्मोत्पन्नं यदाऽवयवान्तराद्विभागं विधत्ते न तदाऽऽकाशादिदेशाद्विभागः । यदा त्वाकाशादिदेशाद्विभागः, न तदाऽवयवान्तरादिति स्थिति नियमः कर्मणो गगनविभागाकर्तृत्वस्य द्रव्यारम्भकसंयोगविरोधिविभागारम्भकत्वेन धूमस्य धूमध्वजवर्गेणेव व्यभिचारानुपलम्भात् । ततश्चावयवकर्मावयवान्तरादेव विभागं करोतीति नाऽऽकाशादिदेशात् । तस्माद्विभागाद्द्रव्यारम्भकसंयोगनिवृत्तिः । ततः कारणाभावात्कार्याभाव इति न्यायादवयविनिवृत्तिः, निवृत्तेऽवयविनि तत्कारणयोरवयवयोर्वर्तमानो विभागः कार्यविनाशविशिष्टं कालं स्वतन्त्रं वाऽवयवमपेक्ष्य सक्रिय-

१ क. °षणगु° । २ च. °न्यज्ञानर्वि° । ३ घ. °नादेकत्वसामान्यचिन्तायास्ते परस्परं सुन्दोपसुन्दन्यायेनोभा° । ४ क. °भ्य पुनः क° । ५ ख यक्रियादि° । घ. °यपाका दि° । ६ च. प्रदर्श्यते । ७ क घ. °णानां रू° । ८ क. ख. ग. यदव° । घ. यदवयव्यन्तराविभा° । ९ क. न्तराविभा° । ख. °न्तराविभा° १० घ. तदवयव्यन्तरादिस्थि° । ११ क. °दि स्थि° । १२ क. °भागः क° । ख. ग. घ. °भागक° । १३ च. कत्वे । १४ क. ख. घ. °वर्गेव्य° । च. वर्गेवव्यभि° । १५ ख. °कसिद्धौ नि° ।

स्यैवावयवस्य कार्यसंयुक्तादाकाशदेशाद्विभागमारभते[1] न निष्क्रियस्य कारणाभावात् । द्वितीयस्तु हस्ते[2] कर्मोत्पन्नमवयवान्तराद्विभागं कुर्वदाकाशादिदेशेभ्यो विभागानारभते, ते कारणाकारणविभागाः कर्म यां दिशं प्रति कार्यारम्भाभिमुखतामपेक्ष्य[3] कार्याकार्यविभागमारभते[4][5] यथा हस्ताकाशविभागाच्छरीराकाशविभागः । न चासौ शरीरक्रियाकार्यस्तदा तस्य निष्क्रियत्वात्, नापि हस्तक्रियाकार्यः, व्यधिकरणस्य कर्मणो विभागकर्तृत्वानुपपत्तेः । अतः पारिशेष्यात्कारणाकारणविभागस्तस्य[6] कारणत्वमङ्गीकरणीयम्[7] ।

यद्वादि अन्धकारादौ भावत्वं निषिध्यत इति तदसंगतं तत्र चतुर्धा विवादसंभवात् । तथाहि द्रव्यं तम इति भाट्टाः । वेदान्तिनश्च भणन्ति आरोपितं नीलरूपमिति श्रीधराचार्याः । आलोकज्ञानाभाव इति[8] प्राभाकरैकदेशिनः । आलोकाभाव इति नैयायिकादय इति चेत्तत्र द्रव्यत्वपक्षो न घटते विकल्पानुपपत्तेः । द्रव्यं भवदन्धकारं[9] द्रव्याद्यन्यतममन्यद्वा नाऽऽद्यः । यत्रान्तर्भावोऽस्य तस्य[10] यावन्तो गुणास्तावद्गुणकत्वप्रसङ्गात् । न च तमसो द्रव्यबहिर्भावं[11] इति सांप्रतं निर्गुणस्य तस्य द्रव्यत्वासंभवेन द्रव्यान्तरत्वस्य सुतरामसंभवात् । ननु तमालश्यामलत्वेनोपलभ्यमानं तमः कथं निर्गुणं स्यादिति[12], नीलं नभ इतिवद्भ्रान्तिरेवेत्यलं वृद्धवीवधया[13] । अत एव नाऽऽरोपितं[14]रूपं तमोऽधिष्ठानप्रत्ययमन्तरेणाऽऽरोपायोगात्, बाह्यालोकसहकारिरहितस्य चक्षुषो रूपारोपे सामर्थ्यानुपलम्भाच्च । न चायमचाक्षुषः प्रत्ययः, तदनुविधानस्यानन्यथासिद्धत्वात् । न च *विधिप्रत्ययवेद्यत्वायोगो[15] भाव इति सांप्रतं प्रलयविनाशावधानादिषु[16] व्यभिचारात् । अत एव नाऽऽलोकज्ञानाभावः, अभावस्य प्रतियोगि[17]ग्राहकेन्द्रियग्राह्यत्वनिय-

* विमतं तमः भावो भवितुमर्हति न जानुलिखितप्रत्ययवेद्यत्वाद्घटवादिति । घ.पु.टि. ।

१ घ. °काशाद्विभागदे° । २ घ. °ते कारणाकारणविभागः क° । ३ ङ. °मुखं ता° । ४ घ. °कारणाकरणवि° । ५ घ. °ते । तां दिशं प्रति कार्याकार्यविभागमारभते । य° । ६ च. गस्य । ७ क. ख. ग. घ. °णम° । ८ घ. °ति प्रभा° । ९ ख. घ. °काराख्यं पृथिव्याद्य° । १० च तत्र । ११ ख. °वः संभवतीति सा° । १२ च. °ति चेत्तदसारं गन्धा दिव्याप्तस्य नीलरूपस्य तन्निवृत्तौ निवृत्तेः । अथनीलं तम इतिगतेः कागतिरितिचेन्नीलं न° । १३ च. °द्धपीडया । १४ घ. °तनीलरू° । १५ क. °द्यत्वं न अयोगाभाव इ° । ख. °द्यत्वेनाभावत्वायोग इ° । ग. °द्यत्वं योगो भाव इ° । घ. °द्यत्वेन आलोका इ° । च. द्यत्वं न चात्र प्रयोगाभावादिति । १६ ख. घ. °धानेषु । १७ क. °गिनिम° ।

भेने मानसत्वप्रसङ्गात् । तस्मादालोकाभाव एव तमः, न चाभावे भावधर्माध्यारोपो दुरुपपादः, दुःखाभावे सुखत्वारोपस्य संयोगाभावे विभागत्वाभिमानस्य च दृष्टत्वात् । न चाऽऽलोकाभावस्य घटाद्यभाववद्रूपवदभावत्वेनाऽऽलोकसापेक्षचक्षुर्जन्यज्ञानविषयत्वं स्यादित्येषितव्यं यद्ग्रहे यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षत इति न्यायेनाऽऽलोकग्रह आलोकापेक्षाया अभावेन तदभावग्रहेऽपि तदपेक्षाया अभावात् । न चाधिकरणग्रहणावश्यंभावः, अभावप्रतीतावधिकरणग्रहणावश्यंभावानङ्गीकारादपरथा निवृत्तः कोलाहल इति शब्दप्रध्वंसः प्रत्यक्षो न स्यादिति अप्रामाणिकं तव वचनं परम् । तत्सर्वमभिसंधाय भगवान्कणादः प्रणिनाय सूत्रं द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तम इति प्रत्ययवेद्यत्वेनापि निरूपितम् ।

अभावस्तु निषेधमुखप्रमाणगम्यः सप्तमो निरूप्यते—स *चासमवायत्वे सत्यसमवायः संक्षेपतो द्विविधः । संसर्गाभावान्योन्याभावभेदात् । संसर्गाभावोऽपि त्रिविधः, प्राक्प्रध्वंसात्यन्ताभावभेदात् । तत्रानित्योऽनादितमःप्रागभावः । उत्पत्तिमानविनाशी प्रध्वंसः प्रतियोग्याश्रयोऽभावोऽत्यन्ताभावः । अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभावोऽन्योन्याभावः । नन्वन्योन्याभाव एवात्यन्ताभाव इति चेदहो राजमार्ग एव भ्रमः । अन्योन्याभावो हि तादात्म्यप्रतियोगिकः प्रतिषेधः । यथा घटः पटात्मा न भवतीति संसर्गप्रतियोगिकः प्रतिषेधोऽत्यन्ताभावः, यथा वायौ रूपसंबन्धो नास्तीति । न चास्य पुरुषार्थौपयिकत्वं नास्तीत्याशङ्कनीयं दुःखात्यन्तोच्छेदापरपर्यायनिःश्रेयसरूपत्वेन परमपुरुषार्थत्वात् ॥

इति सर्वदर्शनसंग्रह औलुक्यदर्शनम् ।

---

## अथाक्षपाददर्शनम् ॥ ११ ॥

---

तत्त्वज्ञानाद्दुःखात्यन्तोच्छेदलक्षणं निःश्रेयसं भवतीति †समानतन्त्रेऽपि

---

*भवनिरूपित । घ. पु. टि. । +समवायादिसंबन्धशून्यत्वे सति संबद्धवानित्यर्थः । घ.पु.टि. ।

† न्यायतन्त्रे ।

---

१ च. °न असत्व° । २ घ. °हेऽपि य° । ३ च. °णप्रत्ययत्वाङ्गस्यान° । ४ क. ख. घ. °णिकत्व व° । ५ क. ग. घ. काणादः । ६ क. ख. ग. °म्र्याद्भाव° । ७ क. ख. °गान्यो । ८ ख. °दकल° ।

प्रतिपादितं तदाह सूत्रकारः प्रमाण[1]प्रमेयेत्यादितत्त्वज्ञानान्निःश्रेयसाधिगम इति । इदं न्यायशास्त्रस्याऽऽदिमं सूत्रं न्यायशास्त्रं च पञ्चाध्यायात्मकं, तत्र प्रत्यध्यायं[2]स्याऽऽह्निकद्वयम् । तत्र प्रथमाध्यायस्य प्रथमाह्निके भगवता गौतमेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाय द्वितीये वादादिसप्तपदार्थलक्षणनिरूपणं[3] कृतम् । द्वितीयस्य प्रथमे संशयपरीक्षणं प्रमाणचतुष्टयाप्रामाण्यशङ्कानिराकरणं च । द्वितीयेऽर्थापत्त्यादेरन्तर्भावनिरूपणम् । तृतीय[4]स्य प्रथमे आत्मशरीरेन्द्रियार्थपरीक्षणं, द्वितीये बुद्धिमनःपरीक्षणम् । चतुर्थस्य प्रथमे प्रवृत्तिदोष[5]प्रेत्यभावफलदुःखापवर्गपरीक्षणं, द्वितीये दोषनिमित्तकत्वानिरूपणम्, अवयव्यादिनिरूपणं च । पञ्चमस्य प्रथमे जातिभेदनिरूपणं, द्वितीये निग्रहस्थानभेदनिरूपणम् ।

मानाधीना मेयसिद्धिरिति न्यायेन[6] प्रमाणस्य प्रथममुद्देशो तदनुसारेण लक्षणस्य कथनीयतया प्रथमोद्दिष्टस्य प्रमाणस्य प्रथमं लक्षणं कथ्यते—साधनाश्रयाव्यतिरिक्तत्वे सति प्रमा[7]व्याप्तं प्रमाणम्, एवं च प्रतितन्त्रसिद्धान्तसिद्धं परमे[8]श्वरप्रामाण्यं संगृहीतं भवति, यदचकथत्सूत्रकारः, मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति । तथा च न्याय[9]पारावारपारदृश्वा विश्वविख्यात[10]कीर्तिरुदयनाचार्योऽपि[11] कुसुमाञ्जलौ चतुर्थे स्तबके—

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ इति ।
साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्तौ[12]विवस्तु[13]क्रमः ।
लेशाद्दृष्टि[14]निमित्तं[15]दुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ इति ।

तच्चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात् । प्रमेयं द्वादशप्रकारम् । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदात् । अनवधारणात्मकं ज्ञानं संशयः । स त्रिविधः, साधारणधर्मासाधारणध-

---

१ ग. °माणाप्र° । २ घ. °यमाह्नि° । ३ क. ख घ. णम् । द्वि° । ४ घ. °यप्र° । ५ ख. °ष प्रत्य° । ६ ख. न प्रथ° । ७ ख. घ. °माणव्या° । ८ च. °रमप्रामा° । ९ क. ख. ग. घ. °यनयपा° । १० ग. °त स्फाति रु° । ११ च °पि न्यायकु° । १२ घ. °स्तानिके वस्तुनि । ले° । १३ क. °स्तु कर्म ले° । ख. स्तुनिः ले° । ग. स्तुकरे ले° । १४ घ. °त्तदृष्टि । १५ च. °प्रमायां योद्धः प्रतिभासते सत्समेयं तच्चद्धा° ।

र्मविप्रतिपत्तिलक्षणभेदात् । यमधिकृत्य प्रवर्तन्ते पुरुषास्तत्प्रयोजनम्, तद्द्विविधं दृष्टादृष्टभेदात् । व्याप्तिसंवेदनभूमिर्दृष्टान्तः, स द्विविधः । साधर्म्यवैधर्म्यभेदात् । प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः, स चतुर्विधः । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमभेदात् । परार्थानुमानवाक्यैकदेशोऽवयवः, स पञ्चविधः प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात् । व्याप्यारोपे[2] व्यापकारोपस्तर्कः । स चैकादशविधः, व्याघातात्माश्रयेतरेतराश्रयचक्रकाश्रयानवस्थाप्रतिबन्धिकल्पना[3]लाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदात् । यथार्थानुभवपर्याया प्रमितिर्निर्णयः । स चतुर्विधः, साक्षात्कृत्यनुमित्युपमितिशाब्दभेदात् । तत्त्वनिर्णयफलः कथाविशेषो वादः । उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनाहीनः[4] कथाविशेषो वितण्डा । कथा नाम वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः । असाधको हेतुत्वेनाभिमतो हेत्वाभासः । स पञ्चविधः, सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालभेदात् । शब्दावृत्तिव्यत्ययेन[5] प्रतिषेधहेतुश्छलं तत्त्रिविधम्, अभिधानतात्पर्योपचारव्यत्ययवृत्तिभेदात् । स्वव्याघातकमुत्तरं जातिः, सा चतुर्विंशतिविधा[6] । साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्तिविशेषापत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमभेदात् । पराजयनिमित्तं निग्रहस्थानं तद्द्वाविंशतिप्रकारं, प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तरार्थान्तरनिरर्थकाविज्ञातार्थापार्थकाप्राप्तकालन्यूनाधिकपुनरुक्ताननुभाषणाज्ञानाप्रतिभाविक्षेपमतानुज्ञापर्यनुयोज्योपेक्षणनिरनुयोज्यानुयोगापसिद्धान्तहेत्वाभासभेदात् । अत्र सर्वान्तर्गणिकस्तु विशेषस्तत्र शास्त्रे विस्पष्टोऽपि विस्तरभिया न प्रस्तूयते ।

ननु प्रमाणादिपदार्थषोडशके प्रतिपाद्यमाने कथमिदं न्यायशास्त्रमिति व्यपदिश्यते सत्यं तथाऽप्यसाधारण्येन व्यपदेशा भवन्तीति न्यायेन न्यायस्य परार्थानुमानापरपर्यायस्य सकलविद्यानुग्राहकतया सर्वकर्मानुष्ठानसाधनतया प्रधानत्वेन तथा व्यपदेशो युज्यते । तथा[11]ऽभाणि सर्वज्ञेन

---

१ च. °णकारणभे° । २ ख. ग. घ. °पेण व्या° । ३ ख. ना गौ° । ४ घ. °पनहीनक° । ५ घ. शब्दवृ° । ६ क. °शतिवा° । ख. ग. घ. °शतिः सा° । ७ घ. °वर्णावर्णवि° । ८ ख. ग. °रणहे° । ९ घ. °र्यभे° । १० ख. °ज्यो नु° । ११ ख. °था च. स° । घ. °था वस° ।

सोऽयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात्। तथा प्रवृत्तिहेतुत्वाच्चेति पाक्षिलस्वामिना च। सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे[3] परीक्षिता॥ इति।

ननु तत्त्वज्ञानान्निःश्रेयसं भवतीत्युक्तं तत्र किं तत्त्वज्ञानादनन्तरमेव निःश्रेयसं संपद्यते नेत्युच्यते किंतु तत्त्वज्ञानाद्दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति। तत्र मिथ्याज्ञानं नामानात्मनि देहादावात्मबुद्धिः, तदनुकूलेषु रागः, तत्प्रतिकूलेषु द्वेषः, वस्तुतस्त्वात्मनः प्रतिकूलमनुकूलं वा न किंचित्समस्ति परस्परानुबन्धत्वाच्च रागादीनां मूढो रज्यति रक्तो मुह्यति मूढः कुप्यति कुपितो मुह्यतीति ततस्तैर्दोषैः प्रेरितः प्राणी प्रतिषिद्धानि शरीरेण हिंसास्तेयादीन्याचरति, वाचाऽनृतादीनि मनसा परद्रोहादीनि सेयं पापरूपा प्रवृत्तिरधर्ममावहतीति। शरीरेण प्रशस्तानि दानपरपरित्राणादीनि वाचा हितसत्यादीनि मनसाऽहिंसादीनि सेयं पुण्यरूपा प्रवृत्तिर्धर्मः। सेयमुभयी वृत्तिस्ततः स्वानुरूपं प्रशस्तं निन्दितं वा जन्म पुनः शरीरादेः प्रादुर्भावः, तस्मिन्सति प्रतिकूलवेदनीयतया बासनात्मकं दुःखं भवति। त इमे मिथ्याज्ञानादयो[12] दुःखान्ता अविच्छेदेन प्रवर्तमानाः संसारशब्दार्थो घटीचक्रवन्निरवधिरनुवर्तते। यदा कश्चित्पुरुषधौरेयः पुराकृतसुकृतपरिपाकवशादाचार्योपदेशेन सर्वमिदं दुःखायतनं दुःखानुषक्तं च[15] पश्यति तदा तत्सर्वं हेयत्वेन बुध्यते। ततस्तन्निवर्तकमविद्यादि निवर्तयितुमिच्छति, तन्निवृत्त्युपायश्च तत्त्वज्ञानमिति कस्यचिच्चतसृभिर्विद्याभिर्विभक्तं प्रमेयं भावयतः सम्यग्दर्शनपदवेदनीयतया तत्त्वज्ञानं जायते, तत्त्वज्ञानान्मिथ्याज्ञानमपैति मिथ्याज्ञानापाये दोषा अपयान्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मा-

---

१ घ. न्यायो निरूपितः। वि°। २ ख. °रुषार्थं प्र°। घ. °रुषं प्रति प्र°। ३ ख. विद्याद्दे°। ४ क. ग. °चित्स्वम°। ख. °चितत्वम°। घ. °चिद्वस्त्वस्ति। ५ क. ख. ग. घ. रज्ञति। ६ घ. °धर्मोऽनुकूलरागादिभिस्तैः प्रेरितो धर्म°। ७ क. ख. ग. घ. °साऽजिघांसा°। ८ ख. °यीप्रवृ°। घ. °यी प्रवृत्तिः स्वा°। ख. ग. °त्तिः स्वा°। ९ च. °न्म संपायति पु°। १० च. °रादेर्जन्म प्रा°। ११ च. °याबाधना°। १२ च. °टीयन्त्रव°। १३ क. ग. ग. °यत्तं दुः°। १४ ख. वा। १५ क. ख. ग. घ. कश्चिच्च।

पाये दुःखमत्यन्तं निवर्तते। साऽऽत्यन्तिकी निवृत्तिरपवर्गः। निवृत्तेरात्यन्तिकत्वं नाम निवर्त्य[2]सजातीयस्य पुनस्तत्रानुत्पाद इति। तथा च पारमर्षं सूत्रम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा[3]भावा[4]दपवर्गः' इति।

ननु दुःखात्यन्तोच्छेदोऽपवर्ग इत्येतद[5]द्यापि* क[6]फोणिगुडायितं वर्तते तत्कथं सिद्धवत्कृत्य व्यवह्रियत इति चेन्नैवं[7], सर्वेषां मोक्षवादिनामपवर्गदशायामात्यन्तिकी दुःखनिवृत्तिरस्तीत्यस्यार्थस्य सर्वतन्त्रसिद्धान्तसिद्धतया घण्टापथत्वात्। नह्यप्रवृत्तस्य दुःखं प्रत्यापद्यत इति कश्चि[8]त्प्रपद्यते। तथा हि आत्मोच्छेदो मोक्ष इति माध्यमिकमते दुःखोच्छेदोऽस्तीत्येतावत्तावदविवादम्। अथ मन्येथाः शरीरादिवदात्माऽपि दुःखहेतुत्वादुच्छेद्य इति तन्न संगच्छते विकल्पानुपपत्तेः। किमात्मा ज्ञानसंतानो विवक्षितः, तदतिरिक्तो वा। प्रथमे न विप्रतिपत्तिः। कः खल्वनुकूलमाचरति प्रतिकूलमाचरेत्। द्वितीये तस्य नित्यत्वे निवृत्तिरशक्यविधानैव, प्रवृत्त्यनुपपत्तिश्चाधिकं दूषणं न खलु कश्चित्प्रेक्षावानात्मनस्तु कामाय सर्वं प्रियं भवतीति सर्वतः प्रियतमस्याऽऽत्मनः समुच्छेदाय प्रयतते, सर्वो हि प्राणी[10] मुक्त[11] इति व्यवहरति। ननु[12] धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदय इति विज्ञानवादिवादे +सामग्र्यभावः सामानाधिकरण्यानुपपत्तिश्च। भावनाचतुष्टयं हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे स्थिरैकाधारासंभवाल्लङ्घनाभ्यासादिवदनासादितप्रकर्षं न स्फुटमभिज्ञानमभिजनयितुं प्रभवति सोपप्लव[13]स्य ज्ञानसंतानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः स एव मुक्त इति सामाना[14]धिक[15]रण्यं न संगच्छते। आवरणमुक्तिर्मुक्तिरिति जैनजनाभिमतोऽपि मार्गो न निर्गतो निरर्गलः। अङ्ग भवान्पृष्टो व्याचे[16]ष्टां किमावरणं? धर्माधर्मभ्रान्तय इति चेदिष्टमेव। अथ देहमेवाऽऽवरणं तथा च तन्निवृत्तौ पञ्जरान्मुक्तस्य शुकस्येवाऽऽत्मनः सततोर्ध्वगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमयमात्मा मूर्तोऽमूर्तो वा।

---

*कया युक्त्या। अत्यन्तगूढायितम्। घ. पु.। + सामग्र्यभावे। घ. पु. टि.।

---

१ च. °की दुःखनि°। २ ख. निवृत्यस°। ३ च. °रापायाद°। ४ ख. ग. घ. °वादिति दुः°। ५ घ. °दभिधायिकपोणागु°। ६ क. ग. कपोणागु°। ख. कपोणायितं प्रव°। ७ च. °वं शङ्किष्ठाः। स°। ८ क. ख. घ. त्प्रत्याप। ९ च. °त्तिव्यवहारानुपपत्तिश्चा°। १० च. °णी सति धार्मिणि मु°। ११ ख. °क्तयेव्य°। १२ क. ख. ग. घ. न तु°। १३ घ. °वन्ना°। १४ घ. °गो निसर्गतो नमिर°। १५ ख. गिसर्ग°। १६ ख. °चष्टा कि°।

प्रथमे निरवयवः सावयवो वा, निरवयवत्वे निरवयवो मूर्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुधर्मवदात्मधर्माणामतीन्द्रियत्वं प्रसजेत्[2] । सावयवत्वे यत्सावयवं तदनित्यमिति *प्रतिबन्धबलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रतिबन्धौ प्रसरेताम् । अमूर्तत्वे गमनमनुपपन्नमेव चलनात्मिकायाः क्रियाया +मूर्तप्रतिबन्धात्पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्ष इति । चार्वाकपक्षेऽपि स्वातन्त्र्यं दुःखनिवृत्तिश्चेदविवाद ऐश्वर्यं चेत्सातिशयतया सदृक्षतया च प्रेक्षावतां नाभिमतम् । प्रकृतिपुरुषान्यत्वख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति सांख्याख्यातेऽपि पक्षे दुःखोच्छेदोऽभ्युपेयते, विवेकज्ञानं पुरुषाश्रयं प्रकृत्याश्रयं वेति एतावदवशिष्यते । तत्र पुरुषाश्रयमिति न श्लिष्यते पुरुषस्य कौटस्थ्यात्स्थाननिरोधापातान्नापि प्रकृत्याश्रयः, अचेतनत्वात्तस्याः । किं च प्रकृतिः प्रवृत्तिस्वभावा निवृत्तिस्वभावा वा, आद्येऽनिर्मोक्षः स्वभावस्यानपायात् । द्वितीये संप्रति संसारोऽस्तमियात् । नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भट्टसर्वज्ञाद्याभिमतेऽपि दुखनिवृत्तिरभिमतैव परंतु नित्यसुखं न प्रमाणपद्धतिमध्यास्ते । श्रुतिस्तत्र प्रमाणमिति चेन्न योग्यानुपलब्धिबाधिते तदनवकाशादवकाशे वा ग्रावप्लवेऽपि तथा भावप्रसङ्गात् । ननु सुखाभिव्यक्तिर्मुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः क्षीरं विहायाऽऽरोचकग्रस्तस्य ×सौवीररुचिमनु[11]भवतीति चेत्तदेतन्नाटकपक्षपातितं त्वद्वच इत्युपेक्ष्यते । सुखस्य सातिशयतया प्र[12]त्यक्षतया बहुप्रत्यनीकाक्रान्ततया साधनप्रार्थ[13]नापरिक्लिष्टतया च दुःखाविनाभूतत्वेन विषानुषक्तमधुवद्दुःखपक्षनिक्षेपात् । नन्वेकमनुसंधित्सतोऽपरं प्रच्यवत इति न्यायेन दुःखवत्सु[14]खमित्युच्छिद्यत इति अकाम्योऽयं पक्ष इति चेन्मैवं मंस्थाः सुखसंपादने दुःखसाधनबाहुल्यानुषङ्गनियमेन तप्तायःपिण्डे तपनीयबुद्ध्या प्रव-

* व्याप्तिबलेन घ. पु. टी. + मूर्तसंबन्धात् । × आरनालकसौवीरमित्यमरः । घ. पु. ।

१ ख. वा निरवयवो° । २ ख. प्रसंजेत । घ. प्रसज्येत् । ३ घ. दृशत । ४ घ. °वाद्वि° कल्पासहतया मुक्तेर्दुर्निरूपत्वापत्तेः । प्र° । च. °वदनुपादेयतयैव स्यात् । प्र° । ५ क. °तामभि° । ६ ख. ग. °दोऽस्त्वेव वि° । घ. दोऽस्त्येवावि° । ७ घ. °स्थ्यावस्था° । ८ क. °तिभावस° । ख. ग. °ति भाट्टप्र° । घ. तिभगवत्सर्व° । ९ घ. °वप्लवे° । १० घ. °तयोपलम्भावकाशप्र° । ११ घ. °नुभावयती° । ग. °नुसरतीति । १२ क. ख. ग सवृक्षतया । घ. सदृक्षतया । १३ ख. ग. °र्थनप° । १४ ख. घ. °खमव्युच्छि° ।

र्तमानेन साम्यापातात् । तथा हि न्यायोपार्जितेषु विषयेषु कियन्तः सुखखद्योताः कियन्ति दुःखदुर्दिनानि, अन्यायोपार्जितेषु तु यद्भविष्यति तन्मनसाऽपि चिन्तयितुं न शक्यमित्येतत्स्वानुभवमप्रच्छादयन्तः सन्तो विदांकुर्वन्तु, विदां वरा भवन्तः । तस्मात्परिशेषात्परमेश्वरानुग्रहवशाच्छ्रवणादिक्रमेणाऽऽत्मतत्त्वसाक्षात्कारवतः पुरुषधौरेयस्य दुःखनिवृत्तिरात्यन्तिकी निःश्रेयसमिति निरवद्यम् ।

नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमानमागमो वा, न तावदत्र प्रत्यक्षं क्रमते रूपादिरहितत्त्वेनातीन्द्रियत्वात्, नाप्यनुमानं तद्व्याप्तिलिङ्गाभावात्, नाऽऽगमो विकल्पासहत्वात् । किं नित्योऽवगमयत्यनित्यो वा । आद्येऽपसिद्धान्तापातः । द्वितीये परस्पराश्रयापातः । उपमानादिकमशंक्यशङ्कं नियतविषयत्वात् । तस्मादीश्वरः शशविषाणायत इति चेत्तदेतन्न चतुरचेतसां चेतसि चमत्कारमाविष्करोति । विवादास्पदं नगसागरादिकं सकर्तृकं कार्यत्वात्कुम्भवत् । न चायमसिद्धो हेतुः, सावयवत्वेन तस्य सुसाधनत्वात् । ननु किमिदं सावयवत्वम्, अवयवसंयोगित्वम्, अवयवसमवायित्वं वा । नाऽऽद्यः, गगनादौ व्यभिचारात् । न द्वितीयः, तन्तुत्वादावनैकान्त्यात् । तस्मादनुपपन्नमिति चेन्मैवं वादीः समवेतद्रव्यत्वं सावयवत्वमिति निरुक्तेर्वक्तुं शक्यत्वात् । अवान्तरमहत्त्वेन वा कार्यत्वानुमानस्य सुकरत्वात् । नापि विरुद्धो हेतुः साध्यविपर्ययव्याप्तेरभावात् । नाप्यनैकान्तिकः पक्षादन्यत्र वृत्तेरदर्शनात् । नापि कालात्ययोपदिष्टः, बाधकानुपलम्भात् । नापि सत्प्रतिपक्षः प्रतिभटादर्शनात् । ननु नगादिकमकर्तृकं शरीराजन्यत्वाद्गगनवदिति चेन्नैतत्परीक्षाक्षममीक्ष्यते न हि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति, अजन्यत्वस्यैव समर्थतया शरीरविशेषणवैयर्थ्यात् । तर्ह्यजन्यत्वमेव साधनमिति चेन्नासिद्धेः । नापि सोपाधिकत्वशङ्काकलङ्काङ्कुरः संभवी, अनुकूलतर्कसंभवात् । यद्ययमकर्तृकः स्यात्कार्यमपि न स्यादिह जगति नास्त्येव तत्कार्यं नाम यत्कारकचक्रमवधीर्याऽऽत्मानमासादयेदित्येतदविवादम् । तच्च सर्वं कर्तृवि-

१ ख. वमवच्छा° । २ ख °स्मात्परमे° । ३ घ. °शङ्कनीयमतद्विष° । ४ ख. शङ्कमवि° । ५ ख. घ. °स्य सा° । ६ घ. °त्ययापदिष्टः साध्याभावसाध° । ७ क. ख. ग. ष्टःसाध । ८ च. °ङ्गभावः । ९ क. ख. °सिद्धे ना° । ग. °सिद्धेना° । १० च. °वसेयमात्मा° ।

[1]शेषोपहितमर्यादं कर्तृत्वं चेतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वलक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम् । एवं च कर्तृव्यावृत्तेस्तदुपहितसमस्तकारकव्यावृत्तावकारणककार्योत्पादप्रसङ्ग इति स्थूलः प्रमादः । तथा निरटङ्कि शंकरकिंकरेण—

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंभवः ॥ इति ।

यदीश्वरः कर्ता स्यात्तर्हि शरीरी स्यादित्यादिप्रतिकूलतर्कजातं जागर्तीति चेदीश्वरसिद्ध्यसिद्धिभ्यां व्याघातात् । तदुदितमुदयनेन—

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरु[3]द्धृता ॥ इति ।

न च विशेषविरोधः शक्यशङ्कः, ज्ञातत्वाज्ञातत्वविकल्पपराहतः स्यात् ।

तदेतत्परमेश्वरस्य जगन्निर्माणे प्रवृत्तिः किमर्था स्वार्था परार्था वा, आद्येऽपीष्टप्राप्त्यर्थाऽनिष्टपरिहारार्था वा । नाऽऽद्यः, अवाप्तसकलकामस्य तदनुपपत्तेरतएव न द्वितीयः । द्वितीये प्रवृत्त्यनुपपत्तिः, कः खलु पदार्थं प्रवर्तमानं प्रेक्षावानित्याचक्षीत । अथ करुणया प्रवृत्त्युपपत्तिरित्याचक्षीत कश्चित्तं प्रत्याचक्षीत तर्हि सर्वान्प्राणिनः सुखिन एव सृजेदीश्वरः, न दुःखशबलान्करुणाविरोधात् । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा हि कारुण्यं, तस्मादीश्वरस्य जगत्सर्जनं न युज्यते ।

तदुक्तं भट्टाचार्यैः—

प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्तते ।
जगच्च सृजतस्तस्य किं नाम न कृतं भवेत् ॥ इति ।

नास्तिकशिरोमणे तावदीर्ष्याकषायिते चक्षुषी निमील्य परिभावयतु भवान्करुणया प्रवृत्तिरस्त्येव न च निसर्गतः सुखमयसर्गप्रसङ्गः सृज्यप्राणिकृतसुकृतपरिपाकविशेषाद्वैषम्योपपत्तेः । न च स्वातन्त्र्यभङ्गः शङ्कनीयः स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहात् । 'एक एव रुद्रो न द्वितीयाय तस्थे' इत्यादिरागमस्तत्र प्रमाणम् । यद्येवं तर्हि परस्पराश्रयबाधव्याधिं समाधत्स्वेति चेत्तस्यानुत्थानात् । किमुत्पत्तौ परस्पराश्रयः शङ्क्यते ज्ञप्तौ वा । नाऽऽद्यः, आगमस्येश्वराधीनोत्पत्तिक-

---

१ ख. घ. °शेषाहि° । २ ख. °थाहि नि° । ३ क. ख. घ. °रुच्यते इ° । ४ घ. °हतः । स्या° । ङ. °हतत्वात् । तदे° । ५ च. °ष्टभङ्गार्था । ६ ङ. प्रहरणे° । ७ क. ख. ग. घ. °न्दोऽपि प्र° । ८ क. ग. घ. °गच्चासृ° । ९ ख. °मृ । एवं ।

त्वेऽपि परमेश्वरस्य नित्यत्वेनोत्पत्तेरनुपपत्तेः । नापि ज्ञप्तौ परमेश्वरस्याऽऽगमाधीनज्ञप्तिकत्वेऽपि तस्यान्यतोऽवगमात् । नापि तदनित्यत्वज्ञप्तावागमानित्यत्वस्य तीव्रादिधर्मोपेतत्वादिना सुगमत्वात् ।

तस्मान्निवर्तकधर्मानुष्ठानवशादीश्वरप्रसादसिद्धावभिमतेष्टसिद्धिरिति सर्वमवदातम् ।

इति सर्वदर्शनसंग्रहेऽक्षपाददर्शनम् ।

---

## अथ जैमिनिदर्शनम् ॥ १२ ॥

---

ननु धर्मानुष्ठानवशादभिमतधर्मसिद्धिरिति जेगीयते भवता । तत्र धर्मः किंलक्षणकः किंप्रमाणक इति चेदुच्यते श्रूयतामवधानेन । अस्य प्रश्नस्य प्रतिवचनं प्राच्यां मीमांसायां प्रादर्शि जैमिनिना मुनिना । सा हि मीमांसा द्वादशलक्षणी, तत्र प्रथमेऽध्याये विध्यर्थवादमन्त्रस्मृतिनामधेयार्थकस्य शब्दराशेः प्रामाण्यम् । द्वितीये कर्मभेदोपोद्घातप्रमाणापवादप्रयोगभेदरूपोऽर्थः । तृतीये श्रुतिलिङ्गवाक्यादिविरोधप्रतिपत्तिकर्मानारभ्याधीतबहुप्रधानोपकारकप्रयाजादियाजमानाचिन्तनम् । चतुर्थे प्रधानप्रयोजकत्वाप्रधानप्रयोजकत्वजुहूपर्णतादिफलराजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता । पञ्चमे श्रुत्यादिक्रमतद्विशेषवृद्ध्यवर्धनप्राबल्यदौर्बल्यचिन्ता । षष्ठेऽधिकारितद्धर्मद्रव्यप्रतिनिध्यर्थलोपनप्रायश्चित्तसत्रदेयवह्निविचारः । सप्तमे प्रत्यक्षावचनातिदेशेषु नामलिङ्गातिदेशविचारः । अष्टमे स्पष्टास्पष्टप्रबललिङ्गातिदेशापवादविचारः । नवम ऊहविचारारम्भसामोहमन्त्रोहतत्प्रसङ्गागतविचारः । दशमे बाधहेतुद्वारलोपविस्तारबाधकारणकार्यैकत्वग्रहादिसामप्रकीर्णनञर्थविचारः । एकादशे तन्त्रोपोद्घाततन्त्रावापतन्त्रप्रपञ्चनावापप्रपञ्चनचिन्तनानि । द्वादशे प्रसङ्गतन्त्रनिर्णयसमुच्चयविकल्पविचारः ।

तत्राथातो धर्मजिज्ञासेति प्रथममधिकरणं पूर्वमीमांसारम्भोपपादनपरम् । अधिकरणं च पञ्चावयवमाचक्षते परीक्षकाः । ते च पञ्चावयवाः, विषयसंशयपूर्वपक्षसिद्धान्तसंगतिरूपाः । तत्राऽऽचार्यमतानुसारेणाधि-

---

१ ख. घ. रमानाधी° । ग. °रमायाधी° । २ च. °स्याऽऽऽत्माधी° । ३ ख. °त त्रि° । ४ ख. °तसि° । ५ क. ग. °तिमञ्जना° । ६ ख. °मानं चि° । ७ च. °हूपूर्ण° । ८ ख. °ल्य चि° । ९ ख. °त्यक्षव° । १० ख. °ह त° । ११ च. °श्रोऽन्यत° । १२ घ. °नाप्र° ।

करणं निरूप्यते—स्वाध्यायोऽध्येतव्य इत्येतद्वाक्यं विषयः। चोदनालक्षणोऽर्थो धर्मइत्यारभ्यान्वाहार्ये च दर्शनादित्येतदन्तं जैमिनीयं धर्मशास्त्रमनारभ्यमारभ्यं वेति संदेहः। अध्ययनविधेरदृष्टार्थत्वदृष्टार्थत्वाभ्यां तत्रानारभ्यमिति पूर्वः पक्षः। अध्ययनविधेरर्थावबोधलक्षणदृष्टफलकत्वानुपपत्तेरर्थावबोधार्थमध्ययनविधिरिति वदन्वादी प्रष्टव्यः किमत्यन्तमप्राप्तमध्ययनं विधीयते किं वा पाक्षिकमवघातवन्नियम्यत इति। न तावदाद्यः, विवादपदं वेदाध्ययनमर्थावबोधहेतुः, अध्ययनत्वाद्भारताध्ययनवदित्यनुमानेन विध्यनपेक्षतया प्राप्तत्वात्। अस्तु तर्हि द्वितीयो यथा नखविदलनादिना तण्डुलनिष्पत्तिसंभवात्। अवघातनिष्पन्नैरेव तण्डुलैः पिष्टपुरोडाशादिकरणेऽवान्तरापूर्वद्वारा दर्शपूर्णमासौ परमापूर्वमुत्पादयतो नापरथा, अतोऽपूर्वमवघातस्य नियमहेतुः प्रकृते लिखितपाठजन्येनाध्ययनजन्येन वाऽर्थावबोधेन क्रत्वनुष्ठानासिद्धेरध्ययनस्य नियमहेतुर्नास्त्येव। तस्मादर्थावबोधहेतुविचारशास्त्रस्य वैधत्वं नास्तीति तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत्स्वर्गफलकोऽक्षरग्रहणँमात्रविधिरिति भवान्परितुष्यतु विश्वजिन्न्यायेनाश्रुतस्यापि स्वर्गस्य कल्पयितुं शक्यत्वात्। यथा स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति विश्वजित्यश्रुतमप्यधिकारिणं संपादयता तद्विशेषणं स्वर्गः फलं युक्त्या निरणायि तद्वदध्ययनेऽप्यस्तु। तदुक्तम्—

विनाऽपि विधिना दृष्टलाभान्न हि तदर्थता।
कल्प्यस्तु विधिसामार्थ्यात्स्वर्गो विश्वजिदादिवत्॥ इति।

एवंच सति वेदमधीत्य स्नायादिति स्मृतिरनुगृहीता भवति। अत्र हि वेदाध्ययनसमावर्तनयोरव्यवधानमवगम्यते। तावके मते त्वधीतेऽपि वेदे धर्मविचाराय गुरुकुले वस्तव्यं तथा सत्यव्यवधानं बाध्येत तस्माद्विचारशास्त्रस्य वैधत्वाभावात्पाठमात्रेण स्वर्गसिद्धेः समावर्तनशास्त्राच्च धर्मविचारशास्त्रमनारभ्भणीयामिति पूर्वपक्षसंक्षेपः। सिद्धान्तस्त्वन्यतः प्राप्तत्वादप्राप्तविधित्वं माऽस्तु नियमविधित्वपक्षस्तु वज्रहस्तेनापि नापहस्तायितुं पार्यते। तथा हि स्वाध्यायोऽध्येतव्य इति

---

१ ङ. °र्थद°। २ घ. °वादास्पदं। ३ घ. °हेतु अ°। ४ च. °वात्पाक्षिकोऽवघातोऽवश्यं कर्तव्य इति विधिना नियम्यते तथा लिखितपाठेन अर्थज्ञानसंभवात्पाक्षिकमध्ययनं विधिना नियम्यत इति चेन्नैतच्चतुरस्रम्। दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यसंभवात्। नव°। ५ ख. °रमपू°। ६ ख. नास्त्येव त°। ७ क. ख. ग. °ग वि°। ८ ग. बाध्यते।

तव्यप्रत्ययः प्रेरणापरपर्यायां पुरुषप्रवृत्तिरूपार्थभावनाभाव्यामभिधाभावनां*प्रत्याययति । सा ह्यर्थभावनासहितमनुबद्धं भाव्यमाकाङ्क्षति न तावत्समानपदोपात्तमध्ययनं[3][4]भाव्यं परिरमते । अध्ययनशब्दार्थस्य स्वाधीनोच्चारणक्षमत्वस्य वाङ्मनसव्यापारस्य क्लेशार्थकस्य भाव्यत्वासंभवात् । नापि समानवाक्योपात्तः स्वाध्यायः स्वाध्यायशब्दार्थस्य वर्णराशेर्नित्यत्वेन विभुत्वेन चोत्पत्त्यादीनां चतुर्णां क्रियाफलानामसंभवात् । तस्मात्सामर्थ्यप्राप्तोऽवबोधो भावत्वेनावतिष्ठते । अर्थी समर्थो विद्वानधिक्रियत इति न्यायेन दर्शपूर्णमासादिविषयावबोधमवेक्षमाणास्तत्त्वबोधे स्वाध्यायं विनियुञ्जते । अध्ययनविधिश्च लिखितपाठादिव्यावृत्त्याऽध्ययनसंस्कृतत्वं स्वाध्यायस्यावगमयति । तथा च यथा दर्शपूर्णमासादिजन्यं परमापूर्वमवघातादिजन्यस्यावान्तरापूर्वस्य कल्पकं तथा समस्तक्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यमपूर्वं कल्पयिष्यति, नियमाद्दृष्टानिष्टौ विधिश्रवणवैफल्यमापद्येत । न च विश्वजिन्न्यायेन फलकल्पनाऽवकल्प्यते । अर्थावबोधे दृष्टे फले सति फलान्तरकल्पनाया अयोगात् । तदुक्तम्—

लभ्यमाने फले दृष्टे नादृष्टफलकल्पना ।
विधेस्तु नियमार्थत्वान्नाऽऽनर्थक्यं भविष्यति ॥ इति ।

ननु वेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपि साङ्गवेदाध्यायिनः पुरुषस्यावबोधसंभवाद्विचारशास्त्रस्य वैफल्यमिति चेत्तदसमञ्जसं बाधेमात्रसंभवेऽपि निर्णयस्य विचाराधीनत्वात् । तद्यथा, अक्ताः शर्करा उपदधातीत्यत्र घृतेनैव न तैलादिनेत्यर्थनिर्णयो व्याकरणेन निगमेन निरुक्तेन वा न लभ्यते, विचारशास्त्रेण तु तेजो वै घृतमिति वाक्यशेषवशादर्थनिर्णयो लभ्यते । तस्माद्विचारशास्त्रस्य वैधत्वं सिद्धम् । न च वेदमधीत्य स्नायादिति शास्त्रं गुरुकुलनिवृत्तिपरं व्यवधानप्रतिबन्धकं बाध्येतेति मन्तव्यं स्नात्वा भुङ्क्त इतिवत्पूर्वापरीभावसमानकर्तृकत्वमात्रप्रतिपत्त्याऽध्ययनसमावर्तनयोर्नैरन्तर्य[15]प्रतिपत्तेः । तस्माद्विधिसामर्थ्या-

---

* शाब्दीभावनाम् । घ. पु. टि. ।

---

१ क. °वनां सा पि हि° । ग. °वना सापि हि° । २ घ. नाभा° । ३ घ. °यनं भाव्यत्वेन प° । ४ ख. ग. °न भाव्यभा° । ५ च. °व्यं भावं प° । ६ घ. भाव्यासं° । ७ ख. ग. °व्य भावासं° । ८ च. विधयः स्वविष° । ९ ख. °षयस्वविषया° । घ. °षयः स्वविषया° । १० घ. °माणाः स्वावबो° । ११ ख. °च द° । १२ क. ख. °वणं वै° । १३ क. ख. ग. च. °षस्यार्थाव° । १४ घ. °त्ययं नि° । १५ ङ. °न्तर्यप्र° ।

देवाधिकरणसहस्रात्मकं पूर्वमीमांसाशास्त्रमारम्भणीयम् । इदं चाधिकरणं शास्त्रेणोपोद्घातत्वेन संबध्यते । तदाह—

चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते ॥ इति ।

इदमेवाधिकरणं गुरुमतमनुसृत्योपन्यस्यते—अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यत्राध्यापनं नियोगविषयः प्रतिभासते, नियोगश्च नियोज्यमपेक्षते, कश्चात्र नियोज्य इति चेदाचार्यककाम एव संमाननेत्यादिना पाणिन्यनुशासनेनाऽऽचार्यके गम्यमाने नयतेर्धातोरात्मनेपदस्य विधानात्, उपनयने यो नियोज्यः स एवाध्यापनेऽपि तयोरेकप्रयोगत्वात् ।

अत एवोक्तं मनुना मुनिना—

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति ।

ततश्चाऽऽचार्यकर्तृकमध्यापनं माणवककर्तृकेणाध्ययनेन विना न सिध्यतीत्यध्यापनविधिप्रयुक्त्यैवाध्ययनानुष्ठानं सेत्स्यति प्रयोज्यव्यापारमन्तरेण प्रयोजकव्यापारस्यानिर्वाहात् । तर्ह्यध्येतव्य इत्यस्य विधित्वं न सिध्यतीति चेन्मा सैत्सीत्का नो हानिः पृथगध्ययनविधेरध्यु(भ्यु)पगमे प्रयोजनाभावाद्विधित्वस्य नित्यानुवादत्वेनाप्युपपत्तेः । तस्मादध्ययनविधिमुपजीव्य पूर्वमुपन्यस्तौ पूर्वोत्तरपक्षौ प्रकारान्तरेण प्रदर्शनीयौ विचारशास्त्रमवैधत्वेनानारब्धव्यमिति पूर्वपक्षो वैधत्वेनाऽऽरब्धव्यमिति राद्धान्तः । तत्र वैधत्वं वदता वदितव्यं किमध्यापनविधिर्माणवकस्यार्थावबोधमपि प्रयुङ्क्ते किं वा पाठमात्रं, नाऽऽद्यः, विनाऽप्यर्थावबोधेनाध्यापनसिद्धेः । न द्वितीयः पाठमात्रे विचारस्य विषयप्रयोजनयोरसंभवादापाततः प्रतिभातः संदिग्धोऽर्थो विचारशास्त्र[11]विषयो भवति । तथा सति यत्रा[12]र्थावगतिरेव नास्ति तत्र संदेहस्य का कथा विचारफलस्य निर्णयस्य प्रत्याशा दूरत एव । तथा च यदसंदिग्धं[13] प्रयोजनं न च तत्प्रेक्षावत्प्रतिपित्सागोचरः[14] समनस्केन्द्रियसंनिकृष्टः स्पष्टालोकमध्यमध्यासीनो घट इति न्यायेन विषयप्रयोजनयोरसंभवेन विचारशास्त्रमनार-

---

१ ख. °पनविनि° । २ घ. °ना । उ° । ३ च. °जः । सकलं स° । ४ घ. °युक्तैवा° । ५ च. न प्रसि° । ६ च. °धिवाक्यस्य । ७ च. पूर्वपक्षसिद्धान्तौ । ८ च. °धनम° । ९ क. ग. घ. प्रयुञ्जते° । ख. च. प्रयुज्यन्ते° । १० च. °नाध्ययन° । ११ च. °स्त्रस्य वि° । १२ च. °त्राव° । १३ घ. °दिग्धमप्र° । १४ घ. ङ. च. °रः । यथा स° ।

भ्यमिति पूर्वः पक्षः । अध्यापनविधिनाऽर्थावबोधो मा प्रयोजि तथाऽपि साङ्गवेदाध्यायिनो गृहीतपदपदार्थसंगतिकस्य पुरुषस्य पौरुषेयेष्विव प्रबन्धेषु आम्नायेऽप्यर्थावबोधः प्राप्नोत्येव । ननु यथा विषं भुङ्क्ष्वेत्यत्र प्रतीयमानोऽप्यर्थो न विवक्ष्यते माऽस्य गृहे भुङ्क्था इति भोजनप्रतिषेधस्य मातृवाक्यविषयत्वात्तथाऽऽम्नायार्थस्याविवक्षायां विषयाद्यभावदोषः प्राचीनः प्रादुःष्यादिति चेन्मैवं वोचः, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यसंभवाद्विषभोजनवाक्यस्याऽऽप्तप्रणीतत्वेन मुख्यार्थपरिग्रहे बाधः स्यादिति विवक्षा नाऽऽश्रीयते । अपौरुषेये तु वेदे प्रतीयमानोऽर्थः कुतो न विवक्ष्यते, विवक्षिते च वेदार्थे यत्र यत्र पुरुषस्य संदेहः स सर्वोऽपि विचारशास्त्रस्य विषयो भविष्यति तन्निर्णयश्च प्रयोजनं तस्मादध्यापनविधिप्रयुक्तेनाध्ययनेनावगम्यमानस्यार्थस्य विचारार्हत्वाद्विचारशास्त्रस्य वैधत्वेन विचारशास्त्रमारम्भणीयमिति राद्धान्तसंग्रहः ।

स्यादेतद्वेदस्य कथमपौरुषेयत्वमभिधीयते तत्प्रतिपादकप्रमाणाभावात्, कथं मन्येथा अपौरुषेया वेदाः संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवदिति, तदेतन्मन्दं विशेषणासिद्धेः पौरुषेयवेदवादिभिः प्रलये संप्रदायविच्छेदस्य कक्षीकरणात् । किं च किमिदमस्मर्यमाणकर्तृकत्वं नामाप्रतीयमानकर्तृकत्वमस्मरणगोचरकर्तृकत्वं वा, न प्रथमः कल्पः परमेश्वरस्य कर्तुः प्रमितेरभ्युपगमात् । न द्वितीयो विकल्पासहत्वात् । तथा हि किमेकेनास्मरणमभिप्रेयते सर्वैर्वा नाऽऽद्यो यो धर्मशीलो जितमानरोष इत्यादिषु मुक्तकोक्तिषु व्यभिचारात् । न द्वितीयः सर्वास्मरणस्यासर्वज्ञदुर्ज्ञानत्वात्पौरुषेयत्वे प्रमाणसंभवाच्च । वेदवाक्यानि पौरुषेयाणि वाक्यत्वात्, कालिदासादिवाक्यवत् । वेदवाक्यान्याप्तप्रणीतानि प्रमाणत्वे सति वाक्यत्वान्मन्वादिवाक्यवदिति । ननु

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥

इत्यनुमानं प्रति साधनं प्रगल्भत इति चेत्तदपि न प्रमाणकोटिं प्रवेष्टुमीष्टे ।

---

१ ख. अध्ययन° । २ ख. °नस्याप्यप्र° । ३ घ. अथ । ४ घ. °क्षीकारात् । किं । ५ च. °प्रमीय° । ६ घ. °स् । नापिद्वि° । ७ ख. °ल्पानुपपत्तेः । त° । ८ च. °क्यान्यप्र° । ९ च. °नवाच्यत्वाद° । १० च. प्रतिप्रग° ।

भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
भारताध्ययनत्वेन सांप्रताध्ययनं यथा ॥

इति आभाससमानयोगक्षेमत्वात् । ननु तत्र व्यासः कर्तेति स्मर्यते ।

को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।

इत्यादाविति चेत्तदसारम् ।

'ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' ।

इति पुरुषसूक्ते वेदस्य सकर्तृकताप्रतिपादनात् । किंचानित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वाद्घटवत् । नन्विदमनुमानं स एवायं गकार इति प्रत्यभिज्ञाप्रमाणप्रतिहतमिति चेत्तदतिफल्गुलूनपुनर्जातकेशदलितकुन्दादाविव प्रत्यभिज्ञायाः सामान्यविषयत्वेन बाधकत्वाभावात् । नन्वशरीरस्य परमेश्वरस्य ताल्वादिस्थानाभावेन वर्णोच्चारणासंभवात्कथं तत्प्रणीतत्वं वेदस्य स्यादिति चेन्न, तद्भद्रं स्वभावतोऽशरीरस्यापि तस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणसंभवात् । तस्माद्वेदस्यापौरुषेयत्ववाचोयुक्तिर्न युक्तेति चेत्तत्र समाधानमभिधीयते किमिदं पौरुषेयत्वं सिसाधयिषितं पुरुषादुत्पन्नत्वमात्रं, यथाऽस्मदादिभिरहरहरुच्चार्यमाणस्य वेदस्य प्रमाणान्तरेणार्थमुपलभ्य तत्प्रकाशनाय रचितत्वं वा, यथाऽस्मदादिभिरेव निबध्यमानस्य प्रबन्धस्य । प्रथमे न विप्रतिपत्तिः, चरमे किमनुमानबलात्तत्साधनमागमबलाद्वा । नाऽऽद्यो मालतीमाधवादिवाक्येषु[11] सव्यभिचारत्वात् । अथ प्रमाणत्वे सतीति विशिष्यत इति चेत्तदपि न विपश्चितो मनसि वैशद्यमापद्यते[12] प्रमाणान्तरागोचरार्थप्रतिपादकं हि[13] वाक्यं वेदवाक्यं तत्प्रमाणान्तरागोचरार्थप्रतिपादकमिति साध्यमाने मम माता वन्ध्येतिवद्व्याघातापातात् । किं च परमेश्वरस्य लीलाविग्रहपरिग्रहाभ्युपगमेऽप्यतीन्द्रियार्थदर्शनं न संजाघटीति देशकालस्वभावविप्रकृष्टा[15]र्थग्रहणोपायाभावात् । न च तच्चक्षुरादिकमेव तादृक्[14]प्रतीति जननक्षम-

---

१ घ. °त्यादिवचनेनेति । २ घ. °ल्गुपु° । ३ च. °शकालिकाण्डाद्वावि° । ४ च. नत्वश° । ५ घ. °हसं° । ६ ग. °यत्वं सि° । ७ घ. °त्ववचो । ८ क. ख. घ. चेदत्र । ९ घ. °मात्रम् । अथवाऽस्म° । १० ग. °काशाय । ११ ख. ग. घ. °शिष्ट इ° । १२ क. ख. घ. वैषम्य । १३ घ. हि वे° । १४ घ. °दृग्ज्ञानक्ष° । १५ क. ख. °ति ज्ञानक्ष° । ग. °ति जा य° ।

मिति मन्तव्यं[1] दृष्टानुसारेणैव कल्पनाया आश्रयणीयत्वात् । तदुक्तं[2] गुरुभिः सर्वज्ञनिराकरणवेलायाम्—

> यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
> दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ इति ।

अत एव नाऽऽगमबलात्तत्साधनं तेन प्रोक्तमिति पाणिन्यनुशासने जाग्रत्यपि काठककालापतैत्तिरीयमित्यादिसमाख्या, अध्ययनसंप्रदायप्रवर्तकविषयत्वेनोपपद्यते । तद्वदत्रापि संप्रदायप्रवर्तकविषयत्वेनाप्युपपद्यते । न चानुमानबलाच्छब्दस्यानित्यत्वसिद्धिः प्रत्यभिज्ञाविरोधात् । न चासत्यप्येकत्वे सामान्यनिबन्धनं तदिति सांप्रतं सामान्यनिबन्धनत्वमस्य बलवद्बाधकोपनिपातादास्थीयते । क्वचिद्व्यभिचारदर्शनाद्वा तत्र । क्वचिद्व्यभिचारदर्शने तदुत्प्रेक्षायामुक्तं स्वतःप्रामाण्यवादिभिः—

> उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधनम् ।
> स सर्वव्यवहारेषु संशयात्मा विनश्यति ॥ इति ।

नन्विदं प्रत्यभिज्ञानं गत्वादिजातिविषयं न[3] गादिव्यक्तिविषयं तासां प्रतिपुरुषं भेदोपलम्भादन्यथा सोमशर्माऽधीत इति विभागो न स्यादिति चेत्तदपि शोभां न बिभर्ति गादिव्यक्तिभेदे प्रमाणाभावेन गत्वादिजातिविषयकल्पनायां प्रमाणाभावात् । यथा गत्वमजानत एकमेव भिन्नदेशपरिमाणसंस्थानव्यक्त्युपधानवशाद्भिन्नदेशमिवाकल्पमिव महदिव दीर्घमिव वामनमिव प्रथते तथा गव्यक्तिमजानत एकाऽपि व्यञ्जकभेदात्तत्तद्धर्मानुबन्धिनी प्रतिभासते । एतेन विरुद्धधर्माध्यासाद्भेदप्रतिभास इति प्रत्युक्तम् । तत्र किं स्वाभाविको विरुद्धधर्माध्यासो भेदसाधकत्वेनाभिमतः प्रातीतिको वा, प्रथमेऽसिद्धिः । अपरथा स्वाभाविकभेदाभ्युपगमे दश गकारानुदचारयच्चैत्र इति प्रतिपत्तिः स्यात्, न तु दशकृत्वो गकार इति । द्वितीये तु न स्वाभाविकभेदसिद्धिः । न हि परोपाधिभेदेन

---

१ क. °व्यं न्यायात् दृ° । ख. व्यं दृ° । २ च. °क्तं भट्टाचार्यैः स° । ३ ग न गादि° । ४ घ. °यां गादिव्यक्तिविषयता संभवति तासां प्रतिपुरुषं भेदे प्र° । ५ क. °या गोश्त्वम° । ख. ग. घ °था गोत्व° । ६ घ °रिणामसं° । ७ क. ख. ग. घ. ङ. °वाल्प° । ८ क. ख. ग. °क्तिराजा° । ९ घ. °भासा इ° । १० च. प्रयुक्तम् । ११ ङ. च. °दसमधि° । १२ घ. °तः प्रती° । १३ ग. °मे सिद्धः । अ° । १४ ग. °नुच्चार° । १५ क. ग. °विक्रोभे° । ख. °विक्रीने° ।

स्वाभाविकमैक्यं विहन्यते[१]। *मा भून्नभसोऽपि कुम्भाद्युपाधिभेदात्स्वाभाविको भेदस्तत्र[२] व्यावृतव्यवहारो नादनिदानः[३]। तदुक्तमाचार्यैः—

प्रयोजनं तु यज्जातेस्तद्वर्णादेव + लप्स्यते।
व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा॥ इति।

तथा च—

प्रत्यभिज्ञा यदा शब्दे जागर्ति निरवग्रहा।
अनित्यत्वानुमानानि सैव सर्वाणि बाधते॥

एतेनेदमपास्तम्। यदवादि वागीश्वरेण मानमनोहरे, अनित्यः शब्द इन्द्रियविशेषगुणत्वाच्चक्षूरूपवदिति[४]। शब्दद्रव्यत्ववादिनां प्रत्यक्षसिद्धेः[५], ध्वन्यंशे सिद्धसाधनत्वाच्च। अश्रावणत्वोपाधिबाधितत्वाच्च। उदयनस्तु आश्रयाप्रत्यक्षत्वेऽप्यभावस्य प्रत्यक्षतां महता प्रबन्धेन प्रतिपादयन्निवृत्तः कोलाहल उत्पन्नः शब्द इति व्यवहाराचरणे[६] कारणं प्रत्यक्षं[७] शब्दानित्यत्वे प्रमाणयति स्म। सोऽपि विरुद्धधर्मसंसर्गस्यौपाधिकत्वोपपादनन्यायेन दत्तरक्तबलिनेव[८] तालः[९] समापोहि[१०]। नित्यत्वे सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गो[११] यो न्यायभूषणकारोक्तः[१२] सोऽपि ध्वनिसंस्कृतस्योपलम्भाभ्युपगमात्प्रतिक्षिप्तः[१३]। यत्तु[१४] युगपदिन्द्रियसंबन्धित्वेन प्रतिनियतसंस्कारकसंस्कार्यभावानुमानं[१५] तदात्मन्यनैकान्तिकमसति[१६] कलकले ततश्च वेदस्यापौरुषेयतया निरस्तसमस्त[१७]शङ्काकलङ्काङ्कुरत्वेन स्वतः सिद्धं धर्मे प्रामाण्यमिति सुस्थितम्। स्यादेतत्।

प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः[१८]॥

---

+ इत आरभ्य यज्जातेरित्यन्तग्रन्थो न विद्यते घ. पुस्तके। + ततः स्वाभाविकमैक्यं दर्णादेव वर्णैक्यादेव। घ. पु. टि।

---

१ क. ख. ग. °ते प्र°। २ च. °दस्तेन तत्र व्यावृत्तनिनादो ना°। ३ घ. °ते ताराद्यभिव्यक्तिस्तु ना°। ४ ख. °दिनं प्रत्यसि°। ५ घ. °नां शब्दे वि· शेषगुणत्वासिद्धेः। प्रत्यक्षसिद्धेर्ध्वा°। ६ क. ग. °हार वारणे का°। ख. °धारका°। घ. °हारः का°। ७ घ. °त्यक्षश°। ८ च. °लिरेव भेतालः। ९ क. नेव वेतालमयोपि नि° ख. नेवेतालमयोऽपि नि°। ग. °नेव वेतालसमयो हि नि°। घ. °नेव वेतालमय एतेनापि नि°। १० च. °हि योऽपि नि°। ११ घ. °संगेतिन्या°। १२ घ. °रोक्तपक्षः सो°। १३ घ. °निकृतत्वोप°। १४ ग. °त्तु यदि°। १५ ख. घ. °रसं°। १६ च. °कमित्यलमतिकलहेन। त°। घ. °कमित्यलमतिकलकलेन ततो वे°। १७ ख. °स्तश°। १८ क. ख. ग. °तः। प्रथमं पुरतः प्राहुः प्रामाण्यं। वेद वादिनः। प्र°।

प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः ।
प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम् ॥ इति ।

वादिविवाददर्शनात्कथंकारं स्वतः सिद्धं धर्मप्रामाण्यमिति सिद्धवत्कृत्य स्वी क्रियते । किं च किमिदं स्वतः प्रामाण्यं नाम ! किं स्वत एव प्रामाण्यस्य जन्म ! आहोस्वित्स्वाश्रयज्ञानजन्यत्वम् । किमुत स्वाश्रयज्ञानसामग्रीजन्यत्वम् ? उताहो ज्ञानसामग्रीजन्यज्ञानविशेषाश्रितत्वम् ? किंवा ज्ञानसामग्रीमात्रजन्यज्ञानविशेषाश्रितत्वम् ? तत्राऽऽद्यः सावद्यः कार्यकारणभावस्य भेदसमानाधिकरणत्वेनैकस्मिन्नसंभवात्, नापि द्वितीयः, गुणस्य सतो ज्ञानस्य प्रामाण्यं प्रति समवायिकारणतया द्रव्यत्वापातात्, नापि तृतीयः प्रामाण्यस्योपाधित्वे जातित्वे वा जन्मायोगात्, स्मृतित्वानधिकरणस्य ज्ञानस्य बाधात्यन्ताभावः प्रामाण्योपाधिः । न च तस्योत्पत्तिसंभवः, अत्यन्ताभावस्य नित्यत्वाभ्युपगमादत एव न जातेरपि जनिर्युज्यते, नापि चतुर्थः । ज्ञानविशेषो ह्यप्रमा विशेषसामग्र्यां च सामान्यसामग्र्यनुप्रविशति, शिंशपासामग्र्यामिव वृक्षसामग्री, *अपरथा +तस्याऽऽकस्मिकत्वं प्रसज्जेत्तस्मात् =परतस्त्वेन स्वीकृताप्रामाण्यं विज्ञानसामग्रीजन्याश्रितमित्यतिव्याप्तिरापद्येत । पञ्चमविकल्पं विकल्पयामः, किं दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव ज्ञानसामग्रीमात्रजन्यत्वं, किं दोषाभावसहकृतज्ञानसामग्रीजन्यत्वं, नाऽऽद्यः, दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव परतः प्रामाण्यमिति परतःप्रामाण्यवादिभिरुरीकरणात् । नापि द्वितीयः, दोषाभावसहकृतत्वेन सामग्र्यां सहकृतत्वे सिद्धेऽनन्यथासिद्धान्वयव्यतिरेकसिद्धतया दोषाभावस्य कारणतायां वज्रलेपायमानत्वात् । अभावः कारणमेव न भवतीति चेत्तदा वक्तव्यमभावस्य कार्यत्वमस्ति

---

* अपरथा विशेषसामग्र्यनङ्गीकारे घ. पु. टि. । + तस्य विशेषविज्ञानस्य । घ. पु. टि. = सामान्यसामग्र्यतिरिक्तविशेषसामग्रीजन्याश्रितत्वं परतस्त्वम् । घ. पु. टि. ।

---

१ ख. प्रथमः पुर° । २ ङ. °वत्वस्य । ३ ख. °धिकत्वे° । ४ ग. घ. °भवी अ° । ५ घ. °शेषे हि प्रमाण्यं प्रामाण्यवि° । ६ क. ख. °माणवि° । ७ क. °सज्जेत्° । ख. सज्जेत । ग. सज्येत । ८ क. ख. ग. घ. °माण्यवि° । ९ क. ख. °श्रितेति° । घ. °श्रित इतिव्या° । १० ख. °पद्यते प° । ११ ग. °त सा° । च. °तसामग्र्याभावज° । १२ क. ग. °न्यत्वं ज्ञा° । १३ क. ख. ग. °समाग्रसा° । १४ ख. ग. घ. °किं वा दो° । १५ क. °भावास° । १६ ख. °त्वे सि° । १७ ख. ग. °मग्र्या दोषाभावस° । घ. °मग्र्या दोषाभावासहकृतत्वासिद्धेः अ° । १८ क. °द्धेऽन्य° । १९ ग. °वकर° । २० क. ख. ग. °णतया । २१ च. °त् । अथ, अ° ।

न वा, यदि नास्ति तदा[1] पटप्रध्वंसानु[2]पपत्त्या[3] नित्यताप्रसङ्गः। अथास्ति किमपराद्धं कारणत्वेनेति सेयमुभयतःपाशा रज्जुः। तदुदितमुद[4]यनेन–

भावो यथा तथाऽभावः कारणं कार्यवन्मतः ॥ इति।

तथा च प्रयोगः, विमता[5] प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वा[6]दप्रमाव[7]त्परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वादप्रामाण्यवत्। तस्मादुत्पत्तौ ज्ञप्तौ च परतस्त्वे[8] प्रमाणसंभवात्स्वतः सिद्धं प्रामाण्यमित्येतत्पूतिकूष्माण्डा[9]यत इति चेत्तदेतदाकाशमुष्टिहननायते। विज्ञानसामग्रीजन्यत्वे सति *तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वमिति निरुक्तिसंभवात्, अस्ति चात्रानुमानं [10] विमता प्रमा विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तजन्या न भवति, अप्रमात्वानधिकरणत्वाद्घटादिवत्। न चौदयनमनुमानं परतस्त्वसाधकमिति शङ्कनीयं प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति प्रतिसाधनग्रहग्रस्तत्वात्, ज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसंभवे तदतिरिक्तस्य गुणस्य दो[11]षाभावस्य वा कारणत्वकल्पनायां कल्पनागौरवप्रसङ्गाच्च। ननु दोषस्याप्रमाहेतुत्वेन तदभावस्य प्रमां[12] प्रति हेतुत्वं दुर्निवारमिति चेत्, न दोषाभावस्या[13]प्रमाप्रतिबन्धकत्वेनान्यथासिद्धत्वात्।

तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः।
अप्रामा[14]ण्यद्वयासत्त्वं[15] तेनोत्सर्गो[16] नयोदितः ॥ इति।

तथा प्रमाज्ञप्तिरपि ज्ञानज्ञापकसामग्रीत एव जायते। न च संशयानुदयप्रसङ्गो बाधक इति[17] युक्तं वक्तुं सत्यपि प्रतिभासपुष्कलकारणे प्रतिबन्धकदोषादिसमवधाना[18]त्तदुपपत्तेः। किं च तावकमनुमानं स्वतः प्रमाणं न वा। आद्येऽनैकान्तिकता, द्वितीये तस्यापि परतः प्रामाण्यमेवं तस्य तस्यापीत्यनवस्था दुरवस्था[19] स्यात्। यदत्र कुसुमाञ्जलावुदयनेन

---

* इत आरभ्य सति इत्यन्तग्रन्थो न च. पुस्तके।

---

१ घ. दा घट°। २ घ. °नुत्पत्त्या। ३ ख. त्त्या घटस्य नि°। ४ घ. °दयेन। ५ घ. °मतं प्रामाण्यं ज्ञा°। ६ ख. °त्वादप्रामाण्यं प°। ७ ख. ग. घ. °वदप्रामाण्यं प°। ८ घ. °स्त्वे प्रामाण्यसं°। ९ घ. °ण्डायितमिति। १० ख. °ति प्र°। ११ ख. °दोषभा°। १२ ख. प्रमाहे°। १३ ख. °स्याप्रति°। १४ घ. °माण्यासत्त्वं तेनोत्सर्गस्य प्रामाण्यस्यानयोदितत्वादिति। १५ ख. °सत्त्वेते°। १६ क. °त्सर्गे न°। १७ क. ख. ग. घ. °ति च यु°। १८ च. °धानवशादनुप°। १९ क. ख. ग. घ °स्थातदवस्था स्या°।

झटिति प्रचुर[1]प्रवृत्तेः प्रामाण्यनिश्चयाधीनत्वाभावमापादयता प्रण्यगादि[2] प्रवृत्तिर्ही[3]च्छामपेक्षते तत्प्रा[4]चुर्ये[5] चेच्छा[6]प्राचुर्यमिच्छा चेष्टसाधनताज्ञानं, तच्चेष्टजातीयत्वलिङ्गानु[7]भवं[8] सोऽपीन्द्रियार्थसंनिकर्षं[9] प्रामाण्यग्रहणं[10] तु न क्वचिदुपयुज्यत इति तदपि तस्करस्य पुरस्तात्कक्षे सुवर्ण[11]मुपेत्य[12] सर्वाङ्गोद्घाटनमिव प्रतिभाति[13] । अतः समीहितसाधन[14]ज्ञानमेव प्रमाण[15]तयाऽवगम्यमानामिच्छां जनयतीत्यत्रैव स्फुट एव प्रामाण्यग्रहणस्योपयोगः । किं च क्वचिदपि चेन्निर्विचिकित्सा प्रवृत्तिः संशयादुपपद्येत तर्हि सर्वत्र तथा[16]भावसंभवात्प्रामाण्यनिश्चयो निरर्थकः स्यात्[17], अनिश्चितस्य सत्त्वमेव दुर्लभमिति[18] प्रामाण्यं दत्तजलाञ्जलिकं भवेदित्यलमतिप्रपञ्चेन । यस्मादुक्तम्—

> तस्मात्सद्बोधकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
> अर्था[19]न्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ इति ।

तस्माद्धर्मे स्वतःसिद्धप्रमाणभावे ज्योति[20]ष्टोमेन स्वर्गकामो यजेतेत्यादिविध्यर्थवादमन्त्रनामधेयात्मके वेदे यजेतेत्यत्र त[21]प्रत्ययः प्रकृत्यर्थोपरक्तां भावना[22]मभिधत्त इति सिद्धे व्युत्पत्तिमभ्युपगच्छतामभिहितान्वयवादिनां भट्टाचार्याणां सिद्धान्तो यागविषयो[23] नियोग[24] इति कार्ये व्युत्पत्तिमनुसरतामन्विताभिधानवादिनां प्रभाकरगुरूणां[25] सिद्धान्त इति सर्वमवदातम् ।

इति सर्वदर्शनसंग्रहे जैमिनिदर्शनम् ।

---

## अथ पाणिनिदर्शनम् ॥ १३ ॥

---

नन्वयं प्रकृतिभागो[26]ऽयं प्रत्ययभाग इति प्रकृतिप्रत्ययविभागः कथम[27]वगम्यत इति चेत्पीतपातञ्जल[28]जलानामेतच्चोद्यं चमत्कारं न करोति

---

१ च. प्रकृतप्र॰ । २ क. ख. घ. ॰दिति प्र॰ । ३ घ. ॰र्हीनेच्छा॰ । ४ घ. ॰ते किंतत्प्राचुर्येच्छा॰ । ५ च. ॰चुर्यम् । इ॰ । ६ क. ॰र्येच्छा॰ । ख. र्ये इच्छा॰ । ७ च. ॰ङ्गामावं । ८ घ. ॰भवः सोऽ॰ । ९ घ ॰कर्षप्रा॰ । १० घ. ॰णं विना क्व॰ । ११ च. ॰र्णमपलपतः स॰ । १२ घ. ॰पेतं स॰ । १३ च. ॰भावः । यतः । १४ ख. ग. ॰नमज्ञा॰ । च. ॰नताज्ञा॰ । १५ च. ॰णयतोऽव॰ । १६ घ. घ. तदभा॰ । १७ ॰त् । तथोक्तम् । अ॰ । १८ घ. ॰ति यदि सत्त्वं सुलभं भवेत्तदा प्रा॰ । १९ घ. अथान्य॰ । २० च. ॰वेन ज्यो॰ । २१ घ. तङ्प्र॰ । २२ घ. भावाना॰ । २३ घ. ॰षयं नियोगमिति । २४ क. ख. ग. ॰गमिति । २५ ॰णां राद्धा॰ । २६ च. ॰भावोऽयं । २७ च. ॰थंकारम॰ । २८ क. ख. ग. ॰ञ्जलाना॰ । च. ॰ञ्जलिज॰ ।

व्याकरणशास्त्रस्य प्रकृतिप्रत्ययविभागपरतायाः प्रसिद्धत्वात्। तथा हि पतञ्जलेर्भगवतो महाभाष्यकारस्येदमादिमं वाक्यम्, अथ शब्दानुशासनमिति। अस्यार्थः–अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते, अधिकारः प्रस्तावः प्रारम्भ इति यावत्। शब्दानुशासनशब्देन च पाणिनिप्रणीतं व्याकरणशास्त्रं विवक्ष्यते, शब्दानुशासनमित्येतावत्यभिधीयमाने संदेहः स्यात्। किं शब्दानुशासनं प्रस्तूयते न वेति तथा मा प्रभाङ्क्षीदित्यथशब्दं प्रायुङ्क्त, अथशब्दप्रयोगबलेनार्थान्तरव्युदासेन प्रस्तूयत इत्यस्यार्थस्याभिधीयमानत्वात्, अनेन हि वैदिकाः शब्दाः शं नो देवीरभिष्टय इत्यादयः। तदुपकारिणो लौकिकाः शब्दा गौरश्वः पुरुषो हस्ती शकुनिरित्यादयश्चानुशिष्यन्ते व्युत्पाद्य संस्क्रियन्ते प्रकृतिप्रत्ययविभागवत्तया बोध्यन्त इत्यनुशासनशब्दशासनबलात्कर्मण्येषा षष्ठी विधातव्या। तथा च कर्मणि चेति समासप्रतिषेधसंभवाच्छब्दानुशासनशब्दो न प्रमाणपथमवतरतीति। अत्रायं समाधिरभिधीयते, यस्मिन्कृत्प्रत्यये कर्तृकर्मणोरुभयोः प्राप्तिरस्ति तत्र कर्मण्येव षष्ठीविभक्तिर्भवति न कर्तरीति बहुव्रीहिविज्ञानबलान्नियम्यते। तद्यथाऽऽश्चर्यो गवां दोहोऽशिक्षितेन गोपालकेनेति कर्तर्यपि षष्ठी भवतीति केचिद्ब्रुवते। अत एवोक्तं काशिकावृत्तौ केचिदविशेषेणैव विभाषामिच्छन्ति शब्दानामनुशासनमाचार्येणाऽऽचार्यस्य वेति। शब्दानामनुशासनमित्यत्र तु शब्दानामनुशासनं नार्थानामित्येतावतो विवक्षितस्यार्थस्याऽऽचार्यस्य कर्तुरुपादानेन विनाऽपि सुप्रतिपादत्वादाचार्योपादानमकिंचित्करं तस्मादुभयप्राप्तेरभावादुभयप्राप्तौ कर्मणीत्येषा षष्ठी न भवति किंतु कर्तृकर्मणोः कृतीति कृद्योगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवतीति कृद्योगलक्षणा षष्ठी भविष्यति। तथा चेध्मप्रव्रश्चनपलाशशातनादिवत्समासो भविष्यति। अथ वा शेषलक्षणेयं षष्ठी तत्र किमपि चोद्यं नावतरत्येव। यद्येवं तर्हि शेषलक्षणायाः षष्ठ्याः सर्वत्र सुवचत्वात्षष्ठीसमासप्रतिषेधसूत्राणामानर्थक्यं प्राप्नुयादिति चेत्सत्यं, तेषां स्वरचिन्तायामुपयोगो वाक्यपदीये प्रादर्शि। तदाह महोपाध्यायवर्धमानः–

---

१ क. ग. घ. °ग प्रतिपादन प°। २ च. देहो जायते किं। ३ ख. °नं स्तूयते स्तूयते वे°। ४ क. °ते वे°। ग. घ. °ते स्तूयते वे°। ५ घ. च. प्रयुङ्क्ते। ६ क. °थ प्र°। ७ च शब्दानुशासनम्। अथ केचित्पर्यनुयुञ्जते। अनुशासिक्रियायाः समर्पकत्वात्कर्मभूतस्य, शब्दस्य कर्तृभूतस्याऽऽचार्यस्य प्राप्तौ सत्यामुभयप्राप्तौ कर्मणीत्यनुश°। ८ घ °ति चेदत्रा°। ९ घ. यस्मात्। ९ घ. °सुलभत्वा°। १० च. °ये रिणा प्रा°।

लौकिकव्यवहारेषु यथेष्टं चेष्टतां जनः ।
वैदिकेषु तु मार्गेषु विशेषोक्तिः प्रवर्तताम् ॥

इति पाणिनिसू[1]त्राणामर्थ[2]मत्राभ्यधाद्यतः ।
जनिकर्तुरिति ब्रूते तत्प्रयोजक इत्यपि ॥ इति ।

तथा च शब्दानुशासनापरनामधेयं व्याकरणशास्त्रमारब्धं वेदितव्यमिति वाक्यार्थः संपद्यते । तस्यार्थस्य झटिति प्रतिपत्तये, अथ व्याकरणमित्येवाभिधीयताम्[3] । अथ शब्दानुशासनमित्यधिकाक्षरं[4] मुधाऽ*भिधीयत इति[5] मैवं शब्दानुशासनमित्यन्वर्थसमाख्योपादाने तदीयवेदाङ्गत्वप्रतिपादकप्रयोजनाख्यानासिद्धेः । अन्यथा प्रयोजनानभिधाने व्याकरणाध्ययनेऽध्येतॄणां प्रवृत्तिरेव न प्रसजेत्[6] । ननु निष्कारणो धर्मः षडङ्गो वेदोऽध्येतव्य इत्यध्येतव्य[7]विधानादेव प्रवृत्तिः सेत्स्यतीति चेन्मैवं तथाविधानेऽपि तदीयवेदाङ्गत्वप्रतिपादकप्रयोजनानभिधाने तेषां प्रवृत्तेरनुपपत्तेः । तथा हि पुरा किल वेदमधीत्याध्येतारस्त्वरितं वक्तारो भवन्ति ।

वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः ।

तस्मादनर्थकं व्याकरणमिति तस्माद्वेदाङ्गत्वं मन्यमानस्तदध्ययने प्रवृ[8]त्तिमकार्षुः । ततश्चेदानींतनानामपि तत्र प्रवृत्तिर्न सिध्येत् । सा मा प्रभाङ्क्षीदिति तदीयवेदाङ्गत्वप्रतिपादकं प्रयोजनमन्वाख्येयमेव । यद्यन्वाख्यातेऽपि प्रयोजने न प्रवर्तेरंस्तर्हि लौकिकशब्दसंस्कारज्ञानरहितास्ते यज्ञे कर्मणि प्रत्यवायभाजो भवेयुः । धर्माद्धीयेरन्, अत एव याज्ञिकाः पठन्ति—आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति, अतस्तदीयवेदाङ्गत्वप्रतिपादकप्रयोजनान्वाख्यानार्थमथशब्दानुशासनमित्येव[11] कथ्यते नाथ व्याकरणमिति । भवति च व्याकरणशास्त्रस्य प्रयोजनं तस्य तदुद्देशेन प्रवृत्तेः, तस्य प्रयोजनं यथा स्वर्गोद्देशेन प्रवृत्तस्य यागस्य स्वर्गः प्रयोजनं तस्माच्छब्दानुशिष्टिः संस्कारपदवेदनीया शब्दानुशासनस्य प्रयोजनम् । नन्वेवमप्यभिमतं प्रयोजनं न लभ्यते तदुपायाभावात् । अथ प्रातिपदपाठ एवाभ्युपाय इति मन्येथाः, तर्हि स

---

* इत आरभ्य प्रयोजनानभिधान इत्यन्तग्रन्थो घ. पुस्तके न विद्यते ।

---

१ घ. °त्राणां स्वरमात्रमिदं यतः° । २ च. °र्थवत्त्वमसौ यतः । ३ च. °म् । न तु° । ४ क. ग. °क्षरोपादाने व्या° । ५ ख. धानव्या° । ६ °तिचेन्मै । ७ क. प्रसज्येत । ८ घ. °व्यत्ववि° । ९ च. °जनत्वान° । १० घ. °वृत्तिं माका° । ११ च. °ति । शब्दानुशासनव्या° ।

ह्यनभ्युपाय: शब्दानां प्रतिपत्तौ प्रतिपदपाठो भवेत् । शब्दापशब्दभेदेनाऽऽनन्त्याच्छब्दानाम् । एवं हि समाम्नायते बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदपाठविहितानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम । बृहस्पतिश्च प्रवक्ता, इन्द्रोऽध्येता, दिव्यं वर्षसहस्रमध्ययनकाल: । न च पारावाप्तिरभूत् । किमुताद्य यश्चिरं जीवति, अधीतिबोधाचरणप्रचारणैश्चतुर्भिरुपायैर्विद्योपयुक्ता भवति । तत्राध्ययनकालेनैव सर्वमायुरुपयुक्तं स्यात्तस्मादनभ्युपाय: शब्दानां प्रतिपत्तौ प्रतिपदपाठ इति प्रयोजनं न सिध्येदिति चेन्मैवं शब्दप्रतिपत्तेः प्रतिपदपाठसाध्यत्वानङ्गीकारात् । प्रकृत्यादिविभागकल्पनावत्सु लक्ष्येषु सामान्यविशेषरूपाणां पर्जन्यवत्सकृदेव प्रवृत्तौ बहूनां शब्दानामनुशासनोपलम्भाच्च । तथा हि कर्मणीत्येकेन सामान्यरूपेण लक्षणेन कर्मोपपदाद्धातुमात्रादण्प्रत्यये कृते कुम्भकार: काण्डलाव इत्यादीनां बहूनां शब्दानामनुशासनमुपलभ्यते । एवमातोऽनुपसर्गे इति पदपाठस्याशक्यत्वप्रतिपादनपरोऽर्थवाद: । नन्वन्येष्वप्यङ्गेषु सत्सु किमित्येतदेवाऽऽद्रियते । उच्यते प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्न: फलवान्भवति ।

तदुक्तम्—

आसन्नं ब्राह्मणस्तस्य तपसामुत्तमं तप: ।
प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधा: ॥ इति ।

तस्माद्व्याकरणशास्त्रस्य शब्दानुशासनं भवति साक्षात्प्रयोजनं पारम्पर्येण तु वेदरक्षादीनि । अत एवोक्तं भगवता भाष्यकारेण—रक्षोहागमलघ्वसंदेहा: प्रयोजनमिति । साधुशब्दप्रयोगवशादभ्युदयोऽपि भवति । तथा च कथितं कात्यायनेन—शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देनेति । अन्यैरप्युक्तम्—एक: शब्द: सम्यग्ज्ञात: सुष्ठु प्रयुक्त: स्वर्गे लोके कामधुग्भवतीति । तथा—

१ घ °पायश° । २ च. पारप्राप्ति° । ३ च. °ति स वर्षशतं जीवति । अधीतबो° । ४ ग. °तिबोध्या च° । ५ घ. °मायु: पुरुषस्योप° । ६ च. °वं वोच: । श° । ७ च. °पपद्यते । ८ च. °सर्गेक इत्येकेन विशेषलक्षणेनाऽऽकारान्ताद्धातो: कप्रत्यये कृते धान्यदो धनद इत्यादीनां बहूनां शब्दानामनुशासनमुपलभ्यते । बृहस्पतिरिन्द्रायेति प्रतिप° । ९ घ परार्थ° ।

नाकमिष्टसुखं यान्ति सुयुक्तैर्वद्धवाग्रथैः ।
अथ पत्काषिणो यान्ति येऽचीक्रमतभाषिणः ॥

नन्वचेतनस्य शब्दस्य कथमीदृशं सामर्थ्यमुपपद्यत इति चेन्मैवं मन्येथाः । महता देवेन साम्यश्रवणात् । तदाह श्रुतिः—"चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ।" व्याचकार च भाष्यकारः— चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः । त्रयो अस्य पादा लडादिविषयास्त्रिधा भूतभविष्यद्वर्तमानकालाः । द्वे शीर्षे द्वौ नित्यानित्यात्मानौ नित्यः कार्यश्च व्यङ्ग्यव्यञ्जकभेदात् । सप्त हस्तासो अस्य तिङा सह सप्त सुब्विभक्तयः । त्रिधा बद्धस्त्रिषु स्थानेषु उरसि कण्ठे शिरसि च बद्धः । वृषभ इति प्रसिद्धवृषभत्वेन[2] रूपणं क्रियते वर्षणाद्वर्षणश्च[3] ज्ञानपूर्वकानुष्ठानेन फलप्रदत्वं रोरवीति शब्दं करोति रौतिः शब्दकर्मा, इह शब्दशब्देन प्रपञ्चो विवक्षितः । महो देवो मर्त्यां आविवेश । महादेवः शब्दो मर्त्या मरणधर्माणो मनुष्यास्तानाविवेशेति । महता देवेन परेण ब्रह्मणा साम्यमुक्तं स्यादिति जगन्निदानं स्फोटाख्यो निरवयवो नित्यः शब्दो ब्रह्मैवेति । हरिणाऽभाणि ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्[5] ।
निवर्ततेऽर्थभावेन *प्रक्रिया जगतो यतः ॥ इति ।

ननु नामाख्यातभेदेन पदद्वैविध्यप्रतीतेः कथं चातुर्विध्यमुक्तमिति चेन्मैवं प्रकारान्तरस्य प्रसिद्धत्वात् ।

तदुक्तं प्रकीर्णके—

द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥ इति ।

कर्मप्रवचनीयेन वै पञ्चमेन सह पदस्य पञ्चविधत्वमिति हेलाराजो व्याख्यातवान् । कर्मप्रवचनीयास्तु क्रियाविशेषोपजनितसंबन्धावच्छेदहेतव इति सबन्धविशेषद्योतनद्वारेण क्रियाविशेषद्योतनादुपसर्गेष्वेवान्तर्भवंतीत्यभिसंधाय पदचातुर्विध्यं भाष्यकारेणोक्तं युक्तमिति विवेक्तव्यम् ।

---

* स्वविषयमसत्ताके स्वभावे न मायया घ. पु. टि. ।

---

१ क. °पातश्च° । २ घ. °न रोरूयणं । ३ क. ख. ग. घ. ङ. च. र्षगं च° । ४ घ. °णा क्षरब्र° । ५ च. तदक्षरम् । ६ च. °म् । विवक्षते । ७ च. °ध्यप्रसिद्धेः क° । ८ घ. °वन्तीत्य° ।

ननु भवता स्फोटात्मा नित्यः शब्द इति निजागद्यते[1] तन्न मृष्यामहे तत्र प्रमाणाभावादिति केचित्। अत्रोच्यते—प्रत्यक्षमेवात्र प्रमाणं, गौरित्येकं पदमिति नानावर्णातिरिक्तैकपदावगतेः सर्वजनीनत्वान्न ह्यसति बाधके पदानुभवः शक्यो मिथ्येति वक्तुं पदार्थप्रतीत्यन्यथानुपपत्त्याऽपि स्फोटोऽभ्युपगन्तव्यः। न च वर्णेभ्य एव तत्प्रत्ययः प्रादुर्भवतीति[2] परीक्षाक्षमं विकल्पासहत्वात्, किं[3] समस्ता[4] व्यस्ता वा[5] अर्थप्रत्ययं जनयन्ति[6]। नाऽऽद्यः[7]। वर्णानां क्षणिकानां समूहासंभवात्[8]। नान्त्यः। व्यस्तवर्णेभ्योऽर्थप्रत्ययासंभवात्[9][10]। न च व्याससमासाभ्याम्[11][12]अन्यः प्रकारः समस्तीति तस्माद्वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतिपत्तिः स स्फोट[13] इति वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोट इति तद्विदो वदन्ति। अत एव स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः[14] स्फुटी भवत्यस्मादर्थ इति स्फोटोऽर्थप्रत्यायक इति स्फोटशब्दार्थ[15]मुभयथा निराहुः। तथाचोक्तं भगवता पतञ्जलिना महाभाष्ये—अथ गौरित्यत्र कः शब्दो येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणानां संप्रत्ययो भवति स शब्द इत्युच्यत इति। विवृतं च कैयटेन—वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाचकत्वमिच्छन्ति। वर्णानां वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादित्यादिना तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापित इत्यन्तेन प्रबन्धेन।

ननु स्फोटस्याप्यर्थप्रत्यायकत्वं न घटते विकल्पासहत्वात्। किमभिव्यक्तः स्फोटोऽर्थं[16] प्रत्याययति, अनभिव्यक्तो वा। न चरमः, सर्वदाऽर्थप्रत्ययलक्षणकार्योत्पादप्रसङ्गात्। स्फोटस्य नित्यत्वाभ्युपगमेन निरपेक्षस्य हेतोः सदा सत्त्वेन कार्यस्य विलम्बायोगात्, अथैतद्दोषपरिजि-

---

१ घ. निगद्यते। २ च. दुर्भाव इति परीक्षा क्षमो वि°। ३ क. ग. किं व्यस्तवर्णा अ°। च. किंव्यस्ता वर्णा अर्थं प्रतिपादयन्ति। समस्तावा। नाऽऽद्यः। इतरवर्णवैयर्थ्यप्रसङ्गात्। एकैकस्माद्वर्णादर्थप्रपत्तेः प्रतिपत्तेश्च। नापि द्वितीयः। उत्पन्नप्रध्वस्तवर्णानां समस्तत्वाभावात्। न च व्या°। ४ घ. °मस्तवर्णा व्यस्तवर्णा वा, नाद्यः। वर्णानां स°। ५ ख. वा ना°। ६ क. ग. °न्ति समस्तावा ना°। ७ क. ग. °द्यः ततोऽर्थप्रत्ययानुपलब्धेः। न द्वितीयः। क्ष°। ८ क. ग. समुदायासं°। ९ क. ग. °त् न च°। १० घ. °प्रत्यायकत्वासं°। ११ क. माभ्याम°। १२ मू °भ्यासम°। १३ क. ग. घ. °टः। व°। १४ क. ग. घ. ङ्ग्यः स्फुटति स्फु°। १५ ख. °ब्दार्थं नि°। १६ ख. ग. स्फोटार्थं।

हीर्षयाऽभिव्यक्तः स्फोटोऽर्थं प्रत्याययतीति कक्षी क्रियते तर्थाऽभिव्यञ्ज-यन्तो वर्णाः किं प्रत्येकमभिव्यञ्जयन्ति संभूय वा पक्षद्वयेऽपि वर्णानां वाचकत्वपक्षे भवता ये दोषा भाषितास्त एव स्फोटाभिव्यञ्जकत्वपक्षे व्यावर्तनीयाः। तदुक्तं भट्टाचार्यैर्मीमांसाश्लोकवार्तिके—

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः।
सोऽपि पर्यनुयोगेन नैकेनापि विमुच्यते॥ इति।

विभक्त्यन्तेष्वेव वर्णेषु पाणिनिना ते विभक्त्यन्ता[3]: पदमिति गौतमेन च पदसंज्ञाया विहितत्वात्संकेत[4]ग्रहणेनानुग्रहवशाद्वर्णेष्वेव पदबुद्धिर्भ-विष्यति तर्हि सर इत्येतस्मिन्पदे यावन्तो वर्णास्तावन्त एव रस इत्य-त्रापि एवं वनं नवं नदी दीना रामो मारो राजा जारेत्यादिष्वर्थभेदप्र-तीतिर्न स्यादिति +चेन्न क्रमभेदेन भेदसंभवात्। तदुक्तं तौतातितैः—

यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ इति।

तस्माद्यश्चोभयोः समो दोषो न तेनैकश्चोद्यो भवतीति न्यायाद्वर्णा-नामेव वाचकत्वोपपत्तौ नातिरिक्तस्फोटकल्पनाऽवकल्पत इति चेत्तदे-तत्काशकुशावलम्बनकल्पनं विकल्पानुपपत्तेः। किं वर्णमात्रे पदप्रत्य-यावलम्बनं वर्णसमूहे वा। नाऽऽद्यः परस्परविलक्षणवर्णमालायामभिन्नं निमित्तं पुष्पेषु विना सूत्रं मालाप्रत्ययवदित्येकं पदमिति प्रतिपत्तेरनुप-पत्तेः। नापि द्वितीयः, उच्चरितप्रध्वस्तानां वर्णानां समूहभावासंभवात्। तत्र हि समूहव्यपदेशः। ये पदार्था एकस्मिन्प्रदेशे सहावस्थितत[11]या बहवोऽनुभूयन्ते यथैकस्मिन्प्रदेशे सहावस्थितत[12]याऽनुभूयमानेषु धवख-दिरपलाशादिषु समूहव्यपदेशो यथा वा गजनरतुरगादिषु न च ते वर्णा-स्तथाऽनुभूयन्त उत्पन्नप्रध्वस्तत्वात्। अभिव्यक्तिपक्षेऽपि क्रमेणैवाभि-[13]व्यक्तौ समूहासंभवात्। नापि वर्णेषु काल्पनिकः समूहः कल्पनीय[14]: पर-स्पराश्रयप्रसङ्गात्। एकार्थप्रत्यायक[15]त्वसिद्धौ तदुपाधिना वर्णेषु पदत्व-

---

+ इति चेदित्युत्तरं न क्रमभेदेनेत्यारभ्य तदेतदित्यन्तग्रन्थो घ. पुस्तके न विद्यते।

---

१ घ. थाऽप्यभि°। २ च. °षु सुप्तिङन्तं पदमिति पा°। ३ च. °क्त्यन्तं प°। ४ घ. °ग्रहेणानु°। ५ ख. ग. चेत् का°। ६ च. °भवतामेव वर्णानां वाचकत्वसामर्थ्याभ्युपगमात्। त°। ७ क. °त् तदेतत्का°। ८ क. ग. °मूहो वा°। ९ क. ख. ग. घ. समूहा भा°। १० ख. °भावस°। ११ घ. °तया। १२ घ. °तया। १३ घ. °व्यक्तस्य स°। १४ घ. °नीयस्य प°। १५ घ. °कसि°।

प्रतीतिः, तत्सिद्धावेकार्थप्रत्यायकत्वसिद्धिरिति । तस्माद्वर्णानां[1] वाचकत्वासंभवात्स्फोटोऽभ्युपगन्तव्यः । ननु स्फोटवाचकतापक्षेऽपि प्रागुक्तविकल्पप्रसरेण घट्टकुटी[2]प्रभातायितमिति चेत्तदेतन्मनोराज्यविजृम्भणं वैषम्यसंभवात् । तथाहि अभिव्यञ्जकोऽपि प्रथमो ध्वनिः स्फोटम[3]स्फुटमभिव्यनक्ति । उत्तरोत्तराभिव्यञ्जकक्रमेण स्फुटं स्फुटतरं स्फुटतमं यथा स्वाध्यायः सकृत्पठ्यमानो नावधार्यते, अभ्यासेन तु स्फुटावसायः, यथा वा रत्नतत्त्वं प्रथमप्रतीतौ स्फुटं न चकास्ति चरमे चेतसि यथावदभिव्यज्यते ।

* नादैराहित[4]बीजायामन्त्येन[5] ध्वनिना सह ।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥

इति[6] प्रामाणिकोक्तेः । तस्मादस्माच्छब्दादर्थं प्रतिपद्यामह[7] इति व्यवहारवशाद्वर्णानामर्थवाचकत्वानुपपत्तेः । प्रथमे काण्डे तत्रभवद्भिर्भर्तृहरिभिरभिहितत्वान्निरवयवमर्थप्रत्यायकं शब्दतत्त्वं स्फोटाभाव[8]मभ्युपगन्तव्यमित्येतत्सर्वं परमार्थसंवि[9]ल्लक्षणसत्ताजातिरेव सर्वेषां शब्दानामर्थ इति प्रतिपादनपरे जातिसमुद्देशे प्रतिपादितम् । यदि सत्तैव सर्वेषां शब्दानामर्थस्तर्हि सर्वेषां शब्दानां पर्यायता स्यात्तथा च क्वचिदपि युगपत्त्रिचतुरपदप्रयोगायोग इति महच्चातुर्यमायुष्मतः ।

तदुक्तम्—

पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते ।
पर्यायेणैव ते यस्माद्वदन्त्यर्थं न संहताः ॥ इति ।

तस्मादयं पक्षो न क्षोदक्षम इति चेत्तदेतद्गगनरोमन्थकल्पं नीललोहितपीताद्युपरञ्जकद्रव्यभेदेन स्फटिकमणेरिव संबन्धिभेदात्सत्तायास्तदात्मना भेदेन प्रतिपत्तिसिद्धौ[10] गोसत्तादिरूपगोत्वादिभेदनिबन्धनव्यवहारवैलक्षण्योपपत्तेः । तथा चाऽऽप्तवाक्यम्[11]—

स्फटिकं विमलं द्रव्यं यथा युक्तं पृथक्पृथक् ।
नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यते ॥ इति ।

---

* नादाघातजग्या । घ. पु टि. ।

---

१ च. 'नां साधनात्मकत्वसं' । २ 'कुट्टिप्र' । ३ क. ख. ग. घ. 'टः स्फु°' । ४ घ. °राहत° । ५ क. ख. ग. घ. 'मन्त्येन । ६ च. 'ति व्य°' । ७ घ. °मह° । ८ क ख. ग. स्फोटभा° । ९ क. °ति रेव सर्वेषां शब्दानामर्थ इति प्र' । १० क. न प्रतिपत्तिसिद्धौ स्फ° । ११ घ. °था चोक्तं महाद्भिरिदं बा° ।

तथा हरिणाऽप्युक्तम्—

संबन्धिभेदात्सत्तैव भि[1]द्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा सत्ता सा महानात्मा तामाहुस्त्वतलादयः ॥ इति ।

आश्रयभूतैः संबन्धिभिर्भिद्यमाना कल्पितभे[2]दा गवाश्वादिषु सत्तैव महासामान्यमेव जातिः, गोत्वादि[3]कमपरं सामान्यं परमार्थतस्ततो भिन्नं न भवति । गोसत्तैव गोत्वं नापरमन्वयि प्रतिभासते । एवमश्वसत्ताऽश्वत्वमित्यादि वाच्यम् । एवं च तस्यामेव गवादिभिन्नायां सत्तायां जातौ सर्वे गोशब्दादयो वाचकत्वेन व्यवस्थिताः प्रातिपदिकार्थश्च सत्तेति प्रसिद्धम् । भाववचनो धातुरिति पक्षे भावः सत्तैवेति धात्वर्थः सत्ता भवत्येव क्रियावचनो धातुरिति पक्षेऽपि जातिमन्ये क्रियामाहुरनेकव्यक्ति[4]क्रियासमुद्देशे क्रियाया जातिरूपत्वप्रतिपादनाद्धात्वर्थः सत्ता भवत्येव तस्य भावस्त्वतलाविति भावार्थे त्वतलादीनां विधानात्सत्तावाचित्वं युक्तं सा च सत्ता, उदयव्ययवैधुर्यो[5]न्नित्या सर्वस्य प्रपञ्चस्य तद्विवर्ततया देशतः कालतो वस्तुतश्च परिच्छेदराहित्यात्सा सत्ता महानात्मेति व्यपदिश्यत इति कारिकाद्वयार्थः । द्रव्यपदार्थसंविलक्षणं तत्त्वमेव सर्वशब्दार्थ इति संबन्धसमुद्देशे समर्थितम्—

सत्यं वस्तु तदाकारैरसत्यैरवधार्यते ।
असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते ॥
अध्रुवेण निमित्तेन देवदत्तगृहं यथा ।
गृहीतं गृहशब्देन शुद्धमेवाभिधीयते ॥ इति ।

भाष्यकारेणापि सिद्धे शब्दार्थसंबन्ध इत्येतद्वार्तिकव्याख्यानावसरे द्रव्यं हि नित्यमित्यनेन ग्रन्थेनाश्वत्थोपाध्यवच्छिन्नं ब्रह्मतत्त्वं[6] द्रव्यशब्दवाच्यं सर्वशब्दार्थ इति निरूपितम् । जातिशब्दार्थवाचिनो वाजप्यायनस्य मते गवादयः शब्दा भिन्नद्रव्यसमवेतजातिमभिदधति । तस्यामवगाह्यमानायां तत्संबन्धाद्द्रव्यमवगम्यते । शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते गुणे[7] तत्संबन्धात्प्रत्ययः, द्रव्यसंबन्धिसंबन्धा-

१ ख. °विद्यमाना° । २ क °भेदाग° । ३ घ. °दिकं प° । ४ क. ख. ग. घ. ङ. °क्तिवर्तिनीमिति जातिपदार्थनयानुसारणानेकव्यक्तिक्रि° । ५ घ. °र्या नित्या । ६ च. °तत्त्वशब्दं द्र° । ७ क. ग. °णे संत° ।

त्संज्ञा शब्दानामुत्पत्तिप्रभृत्याविनाशाच्छैशव्यकौमारयौवनाद्यवस्थादिभेदेऽपि स एवायमित्यभि[1]प्रत्ययबलात्सि[2]द्धा देवदत्तत्वादिजातिरभ्युपगन्तव्या क्रियास्वपि जातिरालक्ष्यते सैव धातुवाच्या [3]पठतीत्यादावनुवृत्तप्रत्ययस्य प्रादुर्भावात्[4]। द्रव्यपदार्थवादिव्या[5]डिनये शब्दस्य व्यक्तिरेवाभिधेयतया प्रतिभासते। जातिस्तूपलक्षणतयेति नाऽऽनन्त्यादिदोषावकाशः। पाणिन्याचार्यस्योभयं संमतं यतो जातिपदार्थमभ्युपगम्य जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामित्यादिव्यवहारः। द्रव्यपदार्थमङ्गीकृत्य सरूपाणामेकशेष एकविभक्ताविति[6]त्यादिः। व्याकरणस्य स[7]र्वपार्षदत्वान्मतद्वयाभ्युपगमे न कश्चिद्विरोधः। तस्माद्द्वयं सत्यं परं [8]ब्रह्मतत्त्वं सर्वशब्दार्थ इति स्थितम्। तदुक्तम्—

तस्माच्छक्तिविभागेन सत्यः सर्वः सदात्मकः।
[9]ए[10]कोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते॥ इति।

सत्यस्वरूपमपि हरिणोक्तं संबन्धसमुद्देशे—

यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः॥ इति।

द्रव्यसमुद्देशेऽपि—

विकारापगमे सत्यं सुवर्णं कुण्डले यथा।
विकारापग[11]मो यत्र तामाहुः प्रकृतिं पराम्॥ इति।

अभ्युप[12]गताद्वितीयत्वनिर्वाहाय वाच्यवाचकयोरविभागः प्रदर्शितः—

वाच्या सा सर्वशब्दानां शब्दाच्च न पृथक्कृतः।
अपृथक्त्वेऽपि संबन्धस्तयोर्नानात्मनोरिव॥ इति।

तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्याविद्यामात्र[13]कल्पितत्वेन प्रतिनियताकारोपधीयमानरूपभेदं ब्रह्मतत्त्वं सर्वशब्दविषयः। अभेदे [14]च पारमार्थिके संवृतिवशाद्व्यवहारदशायां स्वप्नावस्थावदुच्चावचः प्रपञ्चो विवर्तत इति कारिकार्थः। तदाहुर्वेदान्तवा[15]दनिपुणाः—

---

१ घ. °भिन्नप्र°। २ क. ग. सिद्धत्वा°। ख. सिद्धादिजा°। घ. °सिद्धाजा°। ३ क. ख. ग. घ. पचती°। ४ क. ख. °त्।नद्र°। ग. °त्। स्वद्र°। ५ घ. °र्व्यालिन°। ६ क. ख. ग. °दिः इत्यादिव्या°। ७ क. सर्वे पा°। ८ घ. ब्राह्मतत्त्वं। ९ ख. एकार्थश°। १० क. ग. घ. °कोऽर्थश°। ११ घ. °गमेऽथाऽऽहुः प्रकृतिं च प°। च °गमे सत्यां ता°। १२ घ. गताद्वितीयत्वनिर्वाहार्थं वाचकयोविभा°। १३ ख. °त्र परिक°। १४ ख. न°। १५ घ. °वादिनि°।

यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।
एवं जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः ॥ इति ।

तदित्थं कूटस्थे परस्मिन्ब्रह्मणि सच्चिदानन्दरूपे प्रत्यगभिन्नेऽवगतेऽनाद्यविद्यानिवृत्तौ तादृग्[1]ब्रह्मात्मनाऽवस्थानलक्षणं निःश्रेयसं सेत्स्यति शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीत्यभियुक्तोक्तेः । तथा च शब्दानुशासनशास्त्रस्य निःश्रेयससाधनत्वं सिद्धम् । तदुक्तम् ।

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं[2] सर्वविद्यानामधिविद्यं प्रचक्षते ॥ इति ।

तथा—इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमार्गाणा[3]मजिह्मा राजपद्धतिः[4] ॥ इति ।

तस्माद्व्याकरण[5]शास्त्रं परमपुरुषार्थसाधनतयाऽध्येतव्यमिति सिद्धम्—

इति सर्वदर्शनसंग्रहे पाणिनिदर्शनम् ॥

---

## अथ सांख्यदर्शनम् ॥ १४ ॥

---

अथ सांख्यैराख्याते परिणामवादे परिपन्थिनि जागरूके कथंकारं विवर्तवाद आदरणीयो भवेदेष हि तेषामाघोषः । संक्षेपेण हि सांख्यशास्त्रे चतस्रो विधाः संभाव्यन्ते, क्वचिद[6]र्थः प्रकृतिरेव कश्चिद्विकृतिरेव, कश्चिद्विकृतिः[7] प्रकृतिश्च, कश्चिदनुभय इति । तत्र केवला प्रकृतिः प्रधानपदेन वेदनीया मूलप्रकृतिः । नासावन्यस्य कस्यचिद्विकृतिः[8] । प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात् । तदुक्तं मूलप्रकृतिरविकृतिरिति । मूलं चासौ[9] प्रकृतिश्च मूलप्रकृतिः । महदादेः कार्यकलापस्यासौ मूलं नत्वस्य प्रधानस्य मूलान्तरमस्ति, अनवस्थापातात् । न च बीजाङ्कुरवदनवस्थादोषो न भवतीति वाच्यं प्रमाणाभावादिति भावः । विकृतयश्च प्रकृतयश्च महदहंकारतन्मात्राणि । तदप्युक्तं महदाद्याः प्रकृतिविकृतयः सप्तेति । अस्यार्थः प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः, सप्त महदादीनि तत्त्वानि तत्रान्तःकरणादिपदवेदनीयं महत्तत्त्वमहंकारस्य प्रकृतिः । मूलप्रकृतेस्तु विकृतिः । एवमहंकारतत्त्वमभिमानापरनामधेयं महतो विकृतिः प्रकृ-

---

१ क. ख. 'दृगब्रह्मा॰ । २ घ. 'नपार्वं॰ । ३ घ. 'माणानाम॰ । ४ घ. राज्यग्यावर्ति॰ । ५ घ. तद्व्या॰ । ६ क. ख. ग. घ. ङ. कश्चिद॰ । ७ ग. द्विवृतिः । ८ ग. द्विवृतिः । ९ घ. मूला चासौ॰ ।

तिश्च । तदेवाहंकारतत्त्वं[1] तामसं सत्पञ्चतन्मात्राणां सूक्ष्माभिधानां तदेव सात्विकं सत्प्रकृतिरेकादशेन्द्रियाणां बुद्धीन्द्रियाणां चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानामुभयात्मकस्य मनसश्च रजसस्तूभयत्र क्रियोत्पादनद्वारेण कारण[2]त्वमस्तीति न वैयर्थ्यम् । तदुक्तमीश्वरकृष्णेन—

अभिमानोऽहंकारस्तस्माद्द्विविधः प्रवर्तते सर्गः ।
एकादशक[3]श्च गणस्तन्मात्रापञ्चकं चैव ॥
सात्विक[4] एकादशकं प्रवर्तते वैकृतादहंकारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्[5]पादपाणिपायूपस्था[6]नि कर्मेन्द्रियाण्याहुः ॥

उभयात्मकमत्र मनः संकल्पविकल्पात्मकमिन्द्रियं[7] च साधर्म्यादिति । विवृतं च । तत्त्वकौमुद्यामाचार्यवाचस्पतिभिः । केवला विकृतिस्तु वियदादीनि पञ्च भूतानि एकादशेन्द्रियाणि च तदुक्तं षोडशकस्तु विकार इति । षोडशसंख्यावच्छिन्नो गणः षोडशको विकार एव न प्रकृतिरित्यर्थः । यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिस्तथाऽपि न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति न प्रकृतिः । तत्त्वान्तरोपादानत्वं चेह प्रकृतित्वमभिमतं गोघटादीनां स्थूलत्वेन्द्रियग्राह्यत्वयोः समानत्वेन तत्त्वान्तरत्वाभावः । तत्र शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः पूर्वपूर्वसूक्ष्मभूतसहितेभ्यः पञ्च भूतानि वियदादीनि क्रमेणैकद्वित्रिचतुष्पञ्चगुणानि जायन्ते । इन्द्रियसृष्टिस्तु प्रागेवोक्ता ।

तदुक्तम्—

प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ इति ।

अनुभयात्मकः पुरुषः । तदुक्तं न प्रकृतिर्न विकृतिः पुरुष इति । पुरुषस्तु कूटस्थनित्योऽपरिणामी न कस्यचित्प्रकृतिर्नापि विकृतिः कस्यचिदित्यर्थः । एतत्पञ्चविंशतितत्त्वसाधकत्वेन प्रमाणत्रयमभिमतम् तदप्युक्तम्—

---

१ घ. °त्वं नाम ता° । २ ख. ग. °णम° । ३ घ. करणग° । ४ क. ख. ग. °कमेका° । घ. °कमेकादशकः । प्र° । ५ क. ख. ग. °क् पाणिपादपा° । ६ क. ख. ग. घ. °स्थाख्यानि° । ७ घ. °यं चेति । उभयसाधर्म्यात् । वि° । ८ क. घ. °ञ्चमहाभू° । ९ क. ख. ग. घ. °ञ्चमहाभू° ।

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ इति ।

इह कार्यकारणभावे चतुर्धा विप्रतिपत्तिः प्रसरति । असतः सज्जायत इति सौगताः *संगिरन्ते । नैयायिकादयः सतोऽसज्जायत इति । वेदान्तिनः सतो विवर्तः कार्यजातं न वस्तुसदिति । सांख्याः पुनः सतः सज्जायत इति । तत्रासतः सज्जायत इति न प्रामाणिकः पक्षः । असतो निरुपाख्यस्य शशविषाणवत्कारणत्वानुपपत्तेः । तुच्छातुच्छयोस्तादात्म्यानुपपत्तेश्च । नापि सतोऽसज्जायते कारकव्यापारात्प्रागसतः शशविषाणवत्सत्तासंबन्धलक्षणो[1]त्पत्त्यनुपपत्तेः । नहि नीलं निपुणतमेनापि पीतं कर्तुं पार्यते । ननु सत्त्वासत्त्वे घटस्य धर्माविति चेत्तदचारु, असति धर्मिणि तद्धर्म इति व्यपदेशानु[2]पपत्त्या धर्मिणः सत्त्वापत्तेः । तस्मात्कारकव्यापारात्प्रागपि कार्यं सदेव सतश्चाभिव्यक्तिरुपपद्यते । यथा पीडनेन तिलेषु तैलस्य दोहनेन सौरभेयीषु पयसः । असतः कारणे किमपि निदर्शनं[3] न दृश्यते । किंच कार्येण कारणं संबद्धं[4] तज्जनकमसंबद्धं वा, प्रथमे कार्यस्य सत्त्वमायातं सतोरेव संबन्ध इति नियमात् । चरमे सर्वं कार्यजातं सर्वस्माज्जा[5]येत, असंब[6]न्धत्वाविशेषात् । तदाख्यायि सांख्याचार्यैः—

असत्त्वान्नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥ इति ।

अथैवमनुष्ठे[7]यासंबन्धमपि[8] तत्तदेव जनयति यत्र यच्छक्तं शक्तिश्च कार्यदर्शनोन्नेयेति तन्न संगच्छते तिलेषु तैलजननशक्तिरित्यत्र तैलस्यासत्त्वे संबद्धत्वासंबद्धत्वविकल्पेन तच्छक्तिरिति निरूपणयोगात्[9][10] । पृथङ् न भवति, पटस्तन्तुभ्यो न भिद्यते, तद्धर्मत्वान्न यदेवं न तदेवं यथा गौरश्वः, तद्धर्मश्च पटस्तस्मान्नार्थान्तरम् । तर्हि प्रत्येकं त एव प्रावरणकार्यं कुर्युरिति चेन्न सं[11]स्थानभेदेनाऽऽविर्भूतपटभावानां प्रावरणा-

* संप्रतिपद्यन्ते । घ. पु. ।

१ घ. °त्पत्तेरसंभवात् । न° । २ घ. °देवास° । ३ घ. °नं दृ° । ४ ख. °द्धं सत्तज° ५ ख. ज्जायते अ° । ६ घ. ङ. °बद्धत्वा° । ७ ग. घ. °ष्ठेयसं° । ८ घ.ङ. °बद्धम° । ९ क.ख ग. घ. °पि तदे° । १० क. °त् कार्यकारणयोरभेदाच्च कार्यस्यासत्त्वं न° । ख. °त् । कार्यकारणयोरभेदाच्च कारणापृथक्कार्यस्य सत्त्वं न° । ग.त् । कार्यकारणयोरभेदाच्च कार्यस्य सत्वं न° । घ. °त् । कार्यकारणयोरभेदाच्च कार्यस्य सत्त्वं कारणात्पृथ° । ११ घ. °स्थाभे° ।

र्थक्रियाकारित्वोपपत्तेः । यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरो भवन्ति निःसरन्ति चाऽऽविर्भवन्ति, एवं कारणस्य तन्त्वादेः पटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते निविशमानास्तिरोभवन्तो विनश्यन्तीत्युच्यन्ते न पुनरसतामुत्पत्तिः सतां वा विनाशः । यथोक्तं भगवद्गीतायाम्—

नासतो विद्यते भावो नाभावो विद्यते सतः । इति ।

ततश्च कार्यानुमानात्तत्प्रधानसिद्धिः । तदुक्तम्—

अस[1]द्[2]कारणत्वादुपादानग्रहणात्सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात्कार[3]णभावाच्च सत्कार्यम् ॥ इति ।

नापि सतो ब्रह्मतत्त्वस्य विवर्तः प्रपञ्चो बाधानुपलम्भात् । अधिष्ठानारोप्ययोश्चिज्जडयोः कलधौ[4]तरू[5]प्यादिवत्सारूप्यभावेनां[6]ऽऽरोपसंभवाच्च । सुखदुःखमोहात्मकस्य तथाविधकारणमवधारणीयं तथा च प्रयोगः- विमतं भावजातं सुखदुःखमोहात्मककारणकं तदन्वितत्वाद्यद्येनान्वीयते तत्तत्कारणकं यथा रुचकादिकं सुवर्णान्वितं सुवर्णाकारणकं तथा चेदं तस्मात्तथेति । तत्र जगत्कारणे येयं सुखात्मकता तत्सत्त्वं या दुःखात्मकता तद्रजः, या च मोहात्मकता तत्तम इति त्रिगुणात्मककारणसिद्धिः । यथा हि प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते, यथा मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखमाविरस्ति तं प्रति सत्त्वगुणप्रादुर्भावात्तत्सपत्नीनां दुःखम् । ताः प्रति रजोगुणप्रादुर्भावात् । तामलभमानस्य चैत्रस्य मोहो भवति तं प्रति तमोगुणसमुद्भवात् । एवमन्यदपि घटादिकं लभ्यमानं सुखं करोति परैरपि ह्रियमाणं दुःखाकरोति, उदासीनस्योपेक्षावि[10]षयत्वेनोपतिष्ठते, उपेक्षाविषयत्वं नाम मोहः । मुह वैचित्ये, इत्यस्माद्धातोर्मोहशब्दनिष्पत्तेः । उपेक्षणीयेषु चित्तवृत्त्यनुदयात् । तस्मात्सर्वं भावजातं सुखदुःखमोहात्मकं त्रिगुणप्रधानकारणकमवगम्यते । तथा च श्वेताश्वतरोपनिषदि श्रूयते—

अजामेकां लोहितशुक्लकृष्णां
बह्वीः *प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥ (श्वेता०अ०४।५) इति ।

---

* सर्वदर्शनसंग्रहपुस्तकेषु तु प्रजा जनयन्तीमिति पाठः ।

---

१ च. °सदुपकरणादुपादानाग्र° । २ ङ. °दकरणादु° । ३ ख. ग. °रणाभा° । ४ घ. °तद्रुप्यादि° ५ क. ख. °रूप्या भेदेनापि सं । ग. रूप्याभेदेनारोपास° । घ. ङ. °रूप्याभा° । ६ घ. °नापि संभवाभावा° । ७ च. °स्य प्रपञ्चस्य त° । ८ क. ख.ग. घ. ङ. च. °वर्णका° । ९ क. °त्तत्पत्नी° । ग. °त्तत्पतीनां । १० म. °त्वेन व्यवति° ।

अत्र लोहितशुक्लकृष्णशब्दा रञ्जकत्वप्रकाशकत्वावरकत्वसाधर्म्याद्रजःसत्त्वतमोगुणत्वप्रतिपादनपराः ।

नन्वचेतनं प्रधानं चेतनानधिष्ठितं महदादिकार्ये न व्याप्रियते । अतः केनचिच्चेतनेनाधिष्ठात्रा भवितव्यं तथा च सर्वार्थदर्शी परमेश्वरः स्वीकर्तव्यः स्यादिति चेत्तदसंगतमचेतनस्यापि प्रधानस्य प्रयोजनवशेन प्रवृत्त्युपपत्तेः । दृष्टं चाचेतनं चेतनानधिष्ठितं पुरुषार्थाय प्रवर्तमानं यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्तते यथा च जलमचेतनं लोकोपकाराय प्रवर्तते तथा च प्रकृतिरचेतनाऽपि पुरुषविमोक्षाय प्रवर्त्स्यति । तदुक्तम्—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ इति ।

यस्तु परमेश्वरः करुणया प्रवर्तक इति परमेश्वरास्तित्ववादिनां डिण्डिमः स प्रायेण गतः, विकल्पानुपपत्तेः । स किं सृष्टेः प्राक्प्रवर्तते सृष्ट्युत्तरकालं वा । आद्ये शरीराद्यभावेन दुःखानुत्पत्तौ जीवानां दुःखप्रहाणेच्छानुपपत्तिः । द्वितीये परस्पराश्रयप्रसङ्गः करुणया सृष्टिः सृष्ट्या च कारुण्यमिति । तस्मादचेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य महदादिरूपेण परिणामः पुरुषार्थप्रयुक्तः प्रधानपुरुषसंयोगनिमित्तः । यथा निर्व्यापारस्याप्ययस्कान्तस्य संनिधानेन लोहस्य व्यापारः, तथा निर्व्यापारस्य पुरुषस्य संनिधानेन प्रधानव्यापारो युज्यते। प्रकृतिपुरुषसंबन्धश्च पङ्ग्वन्धवत्परस्परापेक्षानिबन्धनः । प्रकृतिर्हि भोग्यतया भोक्तारं पुरुषमपेक्षते । पुरुषोऽपि भेदाग्रहाद्बुद्धिच्छायापत्त्या तद्गतं दुःखत्रयं वारयमाणः कैवल्यमपेक्षते । तत्प्रकृतिपुरुषविवेकनिबन्धनं न च तदन्तरेण युक्तमिति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । यथा खलु कौचित्पङ्ग्वन्धौ पथि सार्थेन गच्छन्तौ दैवकृतादुपप्लवात्परित्यक्तसार्थौ मन्दमन्दमितस्ततः परिभ्रमन्तौ भयाकुलौ दैववशात्संयोगमुपगच्छेतां तत्र चान्धेन पङ्गुः स्कन्धमारोपितः, ततश्च पङ्गुदर्शितेन मार्गेणान्धः समीहितं स्थानं प्राप्नोति पङ्गुरपि स्कन्धाधिरूढः । तथा परस्परापेक्षप्रधानपुरुषनिबन्धनः सर्गः । यथोक्तम्—

---

१ ख. °पि प्रयो° । २ क. ख. ग. घ. °र्थाय प्र° । ३ क. ख. ग °वृद्ध्यर्थं क्षी° । ४ च. स गर्भस्रावेण । ५ ख. सृष्टेः । ६ घ °छ्याका° । ७ क. ख. ग. घ. °युक्तप्र° । ८ च. °षनिबन्ध° । ९ क. ख. °न्धनः न° । १० मू. ङ. ततः प° । ११ च. नदर्शनसंबन्धनि° ।

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संबन्धस्तत्कृतः सर्गः ॥ इति ।

ननु पुरुषार्थनिबन्धना भवतु प्रकृतेः प्रवृत्तिः, निवृत्तिस्तु कथमुपपद्यत इति चेदुच्यते यथा भर्त्रा दृष्टदोषा स्वैरिणी भर्तारं पुनर्नोपैति यथा वा कृतप्रयोजना नर्तकी[1] निवर्तते तथा प्रकृतिरपि । यथोक्तम्—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्[2] ।
पुरुषस्य तथा[3]ऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ इति[4] ।

एतदर्थं निरीश्वरसांख्यशास्त्रप्रवर्तककपिला[5]नुसारिणां मतमुपन्यस्तम् ।

इति सर्वदर्शनसंग्रहे सांख्यदर्शनम् ।

---

## अथ पातञ्जलदर्शनम् ॥ १५ ॥

---

सांप्रतं सेश्वरसांख्यप्रवर्तकपतञ्जलिप्रभृतिमुनिमतमनुवर्तमानानां मतमुपन्यस्यते । तत्र सांख्य[6]प्रवचनापरनामधेयं योगशास्त्रं पतञ्जलिप्रणीतं पादचतुष्टयात्मकम् । तत्र प्रथमे पादे—अथ[7] योगानुशासनमिति योगशास्त्रारम्भप्रतिज्ञां विधाय योगश्चित्तवृत्तिनिरोध इत्यादिना योगलक्षणमभिधाय समाधिं सप्रपञ्चं निरदिक्ष[8]द्भगवान्पतञ्जलिः । द्वितीये तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग इत्यादिना व्युत्थितचित्तस्य क्रियायोगं यमादींनि पञ्च बहिरङ्गानि साधनानि । तृतीये देशबन्ध[9]श्चित्तस्य धारणेत्यादिना धारणाध्यानसमाधित्रयमन्त[10]रङ्गं संयम[11]पदवाच्यं [12]तत्रावान्तर[13]फलं विभूतिजातम् । चतुर्थे जन्मौषधिमन्त्र[14]तपःसमाधिजाः सिद्धय इत्यादिना सिद्धिपञ्चकप्रपञ्चनपुरःसरं परमं प्रयोजनं कैवल्यम् । प्रधानादीनि पञ्चविंशतितत्वानि प्राचीनान्येव संमतानि षड्विंशस्तु परमेश्वरः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषः स्वेच्छया निर्माणकायमधिष्ठाय लौकिकवैदिकसंप्रदायप्रवर्तकः संसाराङ्गारे तप्यमानानां प्राणभृतामनुग्राहकश्च ।

---

१ घ. °की नर्तनं त° । च. °कीनृत्यान्निव । २ नृत्तात् । ३ ख. घ. °थानन्दं प्र° । ४ घ. °ति । त° । ५ क. ग. घ. °लादिगतानु° । ६ क. ख. घ. °ख्यप्राग्व° । ७ ग. अथो यो° । ८ घ. °नि च प° । ९ क. ग. °बन्धं चित्त° । १० क ग. °न्तरं सं° । ११ घ. °मपाद° । १२ घ. °तदवा° । १३ क. °फलवि° । १४ क ख. ग. °त्रकल्पः स° ।

ननु पुष्करपलाशवन्निर्लेपस्य तस्य तापः कथमुपपद्यते येन परमेश्वरोऽनुग्राहकतया कक्षी क्रियत इति चेदुच्यते तापकस्य रजसः सत्त्वमेव तप्यं बुद्ध्यात्मना परिणमत इति सत्त्वे परितप्यमाने तमोवशेन[3] तदभेदावगाहिपुरुषोऽपि तप्यत इत्युच्यते। तदुक्तमाचार्यैः—

सत्त्वं तप्यं बुद्धिभावेन वृत्तं भावास्ते वा राजसास्तापकास्ते।

तप्याभेदग्राहिणी तामसी या वृत्तिस्तस्यां तप्य इत्युक्त[6] आत्मा॥ इति।

पतञ्जलिनाऽप्युक्तम्—

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्ते च तद्वृत्तिमनुभवतीति।

भोक्तृशक्तिरिति चिच्छक्तिरुच्यते, सा चाऽऽत्मैव परिणामिन्यर्थे बुद्धितत्त्वे प्रतिसंक्रान्ते च प्रतिबिम्बिते[10] तद्वृत्तिमनुभवतीति बुद्धौ प्रतिबिम्बिता सा चिच्छक्तिर्बुद्धिच्छायापत्त्या बुद्धिवृत्त्यनुकारवतीति भावः। तथा शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति तमनुपश्यन्न तदात्माऽपि तदात्मक इव प्रतिभासत इति। इत्थं तप्यमानस्य पुरुषस्या[13]ऽऽदरनैरन्तर्यदीर्घकालानुबन्धियमनियमाद्यष्टाङ्गयोगानुष्ठानेन परमेश्वरप्रणिधानेन च सत्त्वपुरुषान्यथा[15]ख्यातावनुपप्लवायां जातायामविद्यादयः पञ्च क्लेशाः समूलकाषं कषिता भवन्ति। कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति। ततश्च पुरुषस्य निर्लेपस्य कैवल्येनावस्थानं कैवल्यमिति सिद्धम्।

तत्राथ योगानुशासनमिति प्रथमसूत्रेण प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजनसंबन्धाधिकारिरूपमनुबन्धचतुष्टयं प्रतिपाद्यते। अत्राथशब्दोऽधिकारार्थः स्वी क्रियते। अथशब्दस्यानेकार्थत्वे संभवति कथ[16]मारम्भार्थत्वपक्षे पक्षपातः संभवेत्। अथशब्दस्य मङ्गलाद्यनेकार्थत्वं नामलिङ्गानुशासनेनानुशिष्टं मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेति। अत्र प्रश्नकार्त्स्न्ययोरसंभवेऽप्यानन्तर्यमङ्गलपूर्वप्रकृतापेक्षारम्भलक्षणानां चतुर्णामर्थानां संभवादारम्भार्थत्वानुपपत्तिरिति चेन्मैवं मंस्था विकल्पासहत्वात्, आनन्त-

---

१ क. ख. ग. भावः घ. भवः। च. तप्यभावः। २ क ग. सख्ये त°। घ. सत्त्वे त°। ३ च. तदारोपव°। ४ क. ख. ग. घ. च. °वा ये वा°। ५ वा मानसा°। ६ क. ग. °त्युक्तमात्मा°। ७ क. ख. ग. घ. न्तेव त°। ८ ग. °तद्वाति°। ९ क. ख. ग. घ. न्तेव प्र°। १० क. ख. ग. घ. °तेव त°। ११ क. प्रलयं°। १२ च. °यं बीजम°। १३ घ. °षस्य नै°। १४ क. ख. ग. °न्यताख्या°। १५ घ. °त्यङ्गवि°। १६ ख. थमधिकारार्थत्वप°।

र्यमथशब्दार्थ इति पक्षे यतः कुतश्चिदानन्तर्यं पूर्ववृत्तिभावसाधारणात्कारणादानन्तर्यं वा । न प्रथमः, न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदिति न्यायेन सर्वो जन्तुः किंचित्कृत्वा किंचित्करोत्येवेति तस्याभिधानमन्तरेणापि प्राप्ततया तदर्थाथशब्दप्रयोगवैयर्थ्यप्रसक्तेः । न चरमः, शमाद्यनन्तरं योगस्य प्रवृत्तावपि तस्यानुशासनप्रवृत्तानुबन्धतया शब्दतः प्राधान्याभावात् । न च शब्दतः प्रधानभूतस्यानुशासनस्य शमाद्यानन्तर्यमथशब्दार्थः किं न स्यादिति वदितव्यम् । अनुशासनमिति हि शास्त्रमाह । अनुशिष्यते व्याख्यायते लक्षणभेदोपायफलसहितो योगो येन तदनुशासनमिति व्युत्पत्तेः । अनुशासनस्य च तत्त्वज्ञानचिख्यापयिषानन्तरभावित्वेन शमदमाद्यानन्तर्यनियमाभावाज्जिज्ञासाज्ञानयोस्तु शमाद्यानन्तर्यमाम्नायते– तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदित्यादिना । नापि तत्त्वज्ञानचिख्यापयिषानन्तर्यमथशब्दार्थः । तस्य संभवेऽपि श्रोतृप्रतिपत्तिप्रवृत्त्योरनुपयोगेनानभिधेयत्वात्तथाऽपि निःश्रेयसहेतुतया योगानुशासनं प्रमितं न वा । आद्ये तदभावेऽप्युपादेयत्वं भवेत् । द्वितीये तदभावेऽपि हेयत्वं स्यात्प्रमितं चास्य निःश्रेयसनिदानत्वम् । अध्यात्मयोगाधिगमेन चैवं मत्वा धीरो हर्षशोकौ जहातीति श्रुतेः, समाधावचला बुद्धिस्तदा योगमवाप्स्यसीति स्मृतेश्च, अत एव शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्यं पराकृतम् । अथातो ब्रह्मजिज्ञासेत्यत्र तु ब्रह्मजिज्ञासाया अनधिकार्यत्वेनाधिको[2]यार्थित्वं परित्यज्य साधनचतुष्टयसंपत्तिविशिष्टाधिकारिसमर्पणाय शमदमादिवाक्यविहिताच्छमादेरानन्तर्यमथशब्दार्थं इति शंकराचार्यैर्निरटाङ्कि । अथ मा नाम भूदानन्तर्यार्थोऽथशब्दः, मङ्गलार्थः किं न स्यात्[3], न स्यान्मङ्गलस्य वाक्यार्थे समन्वयाभावात् । अगर्हिताभीष्टावाप्तिर्मङ्गलम् । अभीष्टं च सुखावाप्तिदुःखपरिहाररूपतयेष्टं योगानुशासनस्य च सुखदुःखनिवृत्त्योरन्यतरत्वाभावान्न मङ्गलता । तथा च योगानुशासनं मङ्गलमिति न [4]संपनीपद्यते मृदङ्गध्वनेरिवाथशब्दश्रवणस्य कार्यतया मङ्गलस्य वाच्यत्वलक्ष्यत्वयोरसंभवाच्च । यथाऽऽर्थिकार्थो वाक्यार्थे[5] निविशते तथा कार्यमपि[7] निविशेत, अपदार्थत्वाविशेषात् । पदार्थ एव हि वाक्यार्थे समन्वीयते, अन्यथा शब्दप्रमाणकानां शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्येति

१ च. जन्तुरवश्यं किं° । २ ख. °कारार्थ° । ३ क. °त् स्या° । ४ ङ. संपद्यते । ५ ख. °क्यार्थो नि° । ६ घ. °र्थेन नि° । ७ क. ख. घ °पि अ° । ८ ख. पूर्यत इति° ।

मुद्राभङ्गः कुतो भवेत् । ननु प्रारिप्सितप्रबन्धपरिसमाप्तिपरिपन्थिप्रत्यूहव्यूहप्रशमनाय शिष्टाचारपरिपालनाय च शास्त्रारम्भे मङ्गलाचरणमनुष्ठेयम् । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, आयुष्मत्पुरुषकाणि वीरपुरुषकाणि च भवन्तीत्यभियुक्तोक्तेः । भवति च मङ्गलार्थोऽथशब्दः—

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इति स्मृतिसंभवात् । तथा च वृद्धिरादैजित्यादौ वृद्ध्यादिशब्दवदथशब्दो मङ्गलार्थः स्यादिति चेन्मैवं भाषिष्ठाः । अर्थान्तराभिधानाय प्रयुक्तस्याथशब्दस्य वीणावेण्वादिध्वनिवच्छ्रवणे[1] मङ्गलफलत्वोपपत्तेः । अ[2]थार्थान्तरारम्भवाक्यार्थधीफलकस्याथशब्दस्य कथमन्यफलकतेति चेन्न, अ[3]न्यार्थं[4] नीयमानोदकुम्भोपलम्भवत्तत्संभवात् । न च स्मृतिव्याकोपो माङ्गलिकाविति मङ्गलप्रयो[5]जकत्वविवक्षया प्रवृ[6]त्तिः । नापि पूर्वप्रकृतापेक्षोऽथशब्दः फलत आनन्तर्याव्यतिरेकेण प्रागुक्तदूषणानुषङ्गात् । किमयमथशब्दोऽधिकारार्थः । अथाऽऽनन्तर्यार्थ इत्यादिविमर्शवाक्ये पक्षान्तरोपन्यासे तत्संभवेऽपि प्रकृते तदसंभवाच्च । तस्मात्पारिशेष्यादधिकारपदवेदनीयप्रारम्भार्थोऽथशब्द इति विशेषो भाष्यते । अथैष ज्योतिरथैष विश्वग्ज्योतिरित्यत्राथशब्दः क्रतुविशेषप्रारम्भार्थः परिगृहीतो यथाऽथ शब्दानुशासनमित्यत्राथशब्दो व्याकरणशास्त्राधिकारार्थः । तदभाषि व्यासभाष्ये योगसूत्रविवरणपरे, अथेत्ययमधिकारार्थः प्रयुज्यत इति तद्व्याचख्यौ वाचस्पतिः । तस्मादयमथशब्दोऽधिकारद्योतको मङ्गलार्थश्चेति सिद्धमिति । तदित्थममुष्याथशब्दस्याधिकारार्थत्वपक्षे शास्त्रेण प्रस्तूयमानस्य योगस्योपवर्तनात्समस्तशास्त्रतात्पर्यव्याख्यानेन शास्त्रस्य[11] सुखावबोधप्रवृत्तिरास्तामित्युपपन्नम् । ननु 'हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः' इति याज्ञवल्क्यस्मृतेः पतञ्जलिः कथं योगस्य शासितेति चेदद्धाऽत एव तत्र तत्र पुराणादौ विशिष्ययोगस्य विप्रकीर्णतयो[12] दुर्ग्राह्यार्थत्वं मन्यमानेन भगवता कृपासिन्धुना फणिपतिना सारं संजि-

१ क. ख. ग. घ. °वणम । च. वणमात्रेण मङ्गलकार्यतयापत्तेः । २ घ. अर्थो । ३ ख. नानार्थे । घ. ४ जनत्व । ना° । ५ ख. °वक्षायाप्रवृत्तेः । ना° क. ग. वक्षायाप्रवृत्तेः । ६ घ. ङ. °वृत्तेः । ना । ७ ख. °सेन त° । ८ घ. °रकप° । ९ घ. ङ. विश्वज्यो° । १० क. ख. ग. घ. °त्पर्यार्थव्या° । ११ घ. °त्तिर्भवतीत्यथशब्दस्याधिकारार्थत्वमुप° । १२ घ. °याऽप्राह्या° ।

धृष्णुनाऽनुशासनमारब्धं न तु साक्षाच्छासनम् । यदाऽयमथशब्दोऽधिकारार्थस्तदैवं वाक्यार्थः संपद्येत योगानुशासनं शास्त्रमधिकृतं वेदितव्यमिति । तत्र शास्त्रे व्युत्पाद्यमानतया योगः ससाधनः सफलो विषयस्तद्व्युत्पादनमवान्तरफलं व्युत्पादितस्य योगस्य कैवल्यं परमप्रयोजनं शास्त्रयोगयोः प्रतिपाद्यप्रतिपादकभावलक्षणः संबन्धो योगस्य कैवल्यस्य च साध्यसाधनभावलक्षणः संबन्धः, स च श्रुत्यादिप्रसिद्ध इति प्रागेवावादिषम्[1] । मोक्षमपेक्षमाणाः[2] श्रवणाधिकारिण इत्यर्थसिद्धम् । न चाथातो ब्रह्मजिज्ञासेत्यादावधिकारिणोऽर्थतः सिद्धिराशङ्कनीया तत्राथशब्देनाऽऽनन्तर्याभिधाने[3] प्रणाडिकयाऽधिकारिसमर्पणसिद्धावार्थिकत्वशङ्कानुदयात् । अत एवोक्तं श्रुतिप्राप्ते प्रकरणादीनामनवकाश इति । अस्यार्थः—यत्र हि श्रुत्याऽर्थो न लभ्यते तत्रैव [4]प्रकरणादयोऽर्थं समर्पयन्ति नेतरत्र, यत्र तु शब्दादेवार्थस्योपलम्भस्तत्र नेतरस्य संभवः शीघ्रबोधिन्या श्रुत्या बोधितेऽर्थे तद्विरुद्धार्थं प्रकरणादि समर्पयत्यविरुद्धं वा । न प्रथमः, विरुद्धार्थबोधकस्य तस्य बाधितत्वात् । न चरमः, वैयर्थ्यात्तदाह श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति ।

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥ इति च ।

तस्माद्विषयादिमत्त्वाद्ब्रह्मविचारकशास्त्रवद्योगानुशासनं[5] शास्त्रमारम्भणीयमिति स्थितम् ।

ननु व्युत्पाद्यमानतया योग एवात्र प्रस्तुतो न शास्त्रमिति चेत्सत्यं प्रतिपाद्यतया योगः प्राधान्येन प्रस्तुतः स च तद्विषयेण शास्त्रेण प्रतिपाद्यत इति तत्प्रतिपादने करणं शास्त्रं करणगोचरश्च कर्तृव्यापारो न कर्मगोचरतामाचरति । यथा छेत्तुर्[6]देवदत्तस्य व्यापारभूतमुद्यमननिपातनादिकर्म करणभूतपरशुगोचरं न कर्मभूतवृक्षादिगोचरं तथा च वक्तुः पतञ्जलेः प्रवचनव्यापारापेक्षया योगविषयस्याधिकृतता करणस्य शास्त्रस्याभिधानव्यापारापेक्षया तु योगस्यैवेति[7] विभागः । ततश्च योगशास्त्रस्याऽऽरम्भः संभावनां भजते । अत्र चानुशासनीयो योगश्चित्तवृत्ति-

---

१ क. ख. ग. 'दिष्टम् मो' । घ. °दिष्ट मो° । २ च. °माणा एवाधि° । ३ क. ख. ग. घ. °धान प्र° । ४ क. ख. ग. घ. प्रमाणा° । ५ क. ख. °सनशा° । ६ क. °रं क° । ७ घ. °स्यैव प्रतिपाद्यतेति ।

निरोध इत्युच्यते । ननु युजिर्योग इति संयोगार्थतया परिपठिताद्युजेर्निष्पन्नो योगशब्दः संयोगवचन एव स्यान्न तु निरोधवचनः । अत एवोक्तं याज्ञवल्क्येन—

संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ॥ इति ।

तदेतैद्वार्तं जीवपरयोः संयोगे कारणस्यान्यतरकर्मादेरसंभवादजसंयोगस्य कणभक्षाक्षचरणादिभिः प्रतिक्षेपाच्च । मीमांसकमतानुसारेण तदङ्गीकारेऽपि नित्यसिद्धस्य तस्य साध्यत्वाभावेन शास्त्रवैफल्यापत्तेश्च धातूनामनेकार्थत्वेन युजेः समाध्यर्थत्वोपपत्तेश्च । तदुक्तम्—

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ इति ।

अत एव केचन युंजिं समाधावपि पठन्ति युज समाधाविति । नापि याज्ञवल्क्यवचनव्याकोपः । तत्रस्थस्यापि योगशब्दस्य समाध्यर्थत्वात् ।

समाधिः समतावस्था जीवात्मपरमात्मनोः ।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः ॥

इति तेनैवोक्तत्वाच्च । तदुक्तं भगवता व्यासेन । योगः समाधिरिति । यद्येवमष्टाङ्गयोगे चरमस्याङ्गस्य समाधित्वमुक्तं पतञ्जलिना यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि योगस्येति । न चाङ्ग्येवाङ्गतां गन्तुमुत्सहते, उपकार्योपकारकभावस्य दर्शपूर्णमासप्रयाजादौ भिन्नायतनत्वेनात्यन्तभेदादतः समाधिरपि न योगशब्दार्थो युज्यत इति चेत्तन्न युज्यते व्युत्पत्तिमात्राभिधित्सया तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति निरूपितचरमाङ्गवाचकेन समाधिशब्देनाङ्गिनो योगस्याभेदविवँक्षया व्यपदेशोपपत्तेः । न च व्युत्पत्तिबलादेव सर्वत्र शब्दः प्रवर्तते तथात्वे गच्छतीति गौरिति व्युत्पत्तेस्तिष्ठन्गौर्न स्यात्, गच्छतो देवदत्तस्य स्यात्प्रवृत्तिनिमित्तं च प्रागुक्तमेव चित्तवृत्तिनिरोध इति तदुक्तं योगश्चित्तवृत्तिनिरोध इति । ननु वृत्तीनां निरोधश्चेद्योगोऽभिमतस्तासां ज्ञानत्वेनाऽऽत्माश्रयतया तन्निरोधोऽपि प्रध्वंसपदवेदनीयस्तदाश्रयो भवेत् । प्रागभावप्रध्वंसयोः प्रतियोगिसमानाश्रयत्वनियमात् । ततश्चोपपन्नस्त्वयं धर्मो विकरोति हि धर्मिणमिति न्यायेनाऽऽत्मनः कौटस्थ्यं विहन्येतेति चेत्तदपि न घटते निरोधानां प्रमाणविपर्ययविक-

१ घ. °तदार्तं । २ क. ग. युजिस° । ३ घ. °ति । नन्वेव° । ४ ख. °पि यो° । ५ ख. °र्भासस्व° । ६ घ. °पितं च° । ७ ख° वक्षाया । ८ ख. घ. निवर्तेतेति° । ९ घ. °ते नामनि° ।

ल्पनिद्रा[1]स्मृतिस्वरूपाणां वृत्तीनामन्तःकरणाद्यपरपर्यायचित्तधर्मत्वाङ्गीकारात्। कूटस्थनित्या चिच्छक्तिरपरिणामिनी विज्ञानधर्माश्रयो भवितुं नार्हत्येव। न च चितिशक्तेरपरिणामित्वमसिद्धमिति मन्तव्यं चितिशक्तिरपरिणामिनी सदा ज्ञातृत्वात्, न यदेवं न तदेवं यथा चित्तादि[2], इत्याद्यनुमानसंभवात्तथा यद्यसौ पुरुषः परिणामी स्यात्तदा परिणामस्य कादाचित्कत्वात्तासां चित्तवृत्तीनां सदा ज्ञातृत्वं नोपपद्येत चिद्रूपस्य पुरुषस्य सदैवाधिष्ठातृत्वेनावस्थितस्य यदन्तरङ्गं निर्मलं सत्त्वं तस्यापि सदैव स्थितत्वात्, येन येनार्थेनोपरक्तं भवति तस्य दृश्यस्य सदैव चिच्छायापत्त्या[3] भानोपपत्त्या पुरुषस्य निःसङ्गत्वं संभवति। ततश्च सिद्धं तस्य सदाज्ञातृत्वमिति न[4] काचित्परिणामित्वा[5]शङ्काऽवतरति। चित्तं पुनर्येन विषयेणोपरक्तं भवति स विषयो ज्ञातः[6], यदुपरक्तं न भवति तदज्ञातमिति वस्तुनो[7]ऽयस्कान्तमणिकल्पस्य ज्ञाना[8]ज्ञानकारणभूतोपरागानुपरागधर्मित्वादयः सधर्मकं चित्तं परिणामीत्युच्यते। ननु चित्तस्येन्द्रियाणां चाऽऽहंकारिकाणां सर्वगतत्वा[9]त्सर्वविषयैरस्ति सदा संबन्धः। तथा च सर्वेषां सर्वदा सर्वत्र ज्ञानं प्रसज्येत। सर्वगतत्वेऽपि चित्तं यत्र शरीरे वृत्तिमत्तेन शरीरेण सह संबन्धो येषां विषयाणां तेष्वेवा[10]स्य ज्ञानं भवति नेतरेष्वित्यतिप्रसङ्गाभावादत एवायस्कान्तमणिकल्पा[11] विषया अयःसधर्मकं चित्तमिन्द्रियप्रणालिकयाऽभिसंबन्ध्योपरञ्जयन्ति। तस्माच्चित्तस्य धर्मा वृत्तयो नाऽऽत्मनः। तथा च श्रुतिः—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिरित्येतत्सर्वं मन एव' (मै० ६।३०) इति। चिच्छक्तेरपरिणामित्वं[12] पञ्चशिखाचार्यैराख्यायि, अपरिणामिनी भोक्तृशक्तिरिति पतञ्जलिनाऽपि सदाज्ञाताश्चित्तवृत्तय[13]स्तत्प्रभोः पुरुषस्यापरिणामित्वादिति। चित्तपरिणामित्वेऽनुमानमुच्यते—चित्तं परिणामि ज्ञाताज्ञातविषयत्वात्। श्रोत्रादिवदिति। परिणामश्च त्रिविधः प्रसिद्धो धर्मलक्षणावस्थाभेदात्। धर्मिणश्चित्तस्य नीलाद्यालोचनं धर्मपरिणामः। यथा कनकस्य कटकमुकुटकेयूरादि धर्मस्य वर्तमानत्वादिर्लक्षणपरिणामः। नीलाद्यालोचनस्य स्फुटत्वादिरवस्थापरिणामः कनकादेस्तु नव[14]पुराणत्वा-

---

१ घ. °द्रास्व°। २ घ. °त्ताद्य°। ३ घ. °त्त्या निः°। ४ ख. न कदाचि°। ५ घ. °मित्वश°। ६ क. °तः यदुपरक्तं भ°। ग. °तः नानुपरक्तं भ°। घ. °तः येनोप°। ७ ख. °स्तुतोऽय°। ८ घ. °ज्ञान°। ९ क. ग. °गत्वा°। १० घ. °वाज्ञा। ११ क. ख. ग. °ल्पावि°। घ. °ल्पाविच्छक्तिर्यतो विचिकि°। १२ घ. °त्वं च प°। १३ घ. °वृत्तिरप्येतत्प्र°। १४ क. ख. ग. °न च पु°।

दिरवस्थापरिणामः । एवमन्य[1]त्रापि यथासंभवं परिणामत्रितयमूहनीयं, तथा च प्रमाणादिवृत्तीनां चित्तधर्मत्वात्तन्निरोधोऽपि तदाश्रय एवेति न किंचिदनुपपन्नम् ।

ननु वृत्तिनिरोधो योग इत्यङ्गीकारे सुषुप्त्यादौ विक्षि[3]प्तमूढादिचित्तवृत्तीनां निरोधसंभवाद्योगत्वप्रसङ्गः । न[4] चैतद्युज्यते क्षिप्ताद्यवस्थासु क्लेशप्रहाणादेरसंभवान्निःश्रेयसपरिपन्थित्वाच्च । तथा हि क्षिप्तं नाम तेषु तेषु विषयेषु क्षिप्यमाणमस्थिरं चित्तमुच्यते । तमःसमुद्रे मग्नं निद्रावृत्तिमच्चित्तं मूढमिति गीयते । क्षिप्ताद्विशिष्टं चित्तं विक्षिप्तमिति गीयते । विशेषो नाम चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढमिति न्यायेनास्थिरस्यापि मनसः कादाचित्कसमुद्भूतविषयस्थैर्यसंभवेन स्थैर्यम् । अस्थिरत्वं च स्वाभाविकं व्याध्याद्यनुशयजनितं वा । तदाह व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तराया इति । तत्र दोषत्रयवैषम्यनिमित्तो ज्वरादिर्व्याधिः, चित्तस्याकर्मण्यत्वं स्त्यानं, विरुद्धकोटिद्वयावगाहिज्ञानं संशयः, समाधिसाधनानामभावनं प्रमादः । शरीरवाक्चित्तगुरुत्वादप्रवृत्तिरालस्यं, विषयाभिलाषोऽविरतिः । अत[11]स्मिंस्तद्बुद्धिर्भ्रान्तिदर्शनं, कुतश्चिन्निमित्तात्समाधिभूमेरलाभोऽलब्धभूमिकत्वं लब्धायामपि तस्यां चित्तस्याप्रतिष्ठाऽनवस्थितत्वमित्यर्थः । तस्मान्न वृत्तिनिरोधो योगप[12]क्षनिक्षेपमर्हतीति चेन्मैवं वोचः । हेयभूतक्षिप्ताद्यवस्थात्रये वृत्तिनिरोधस्य[13] हेयत्वसंभवेऽप्युपादेययोरेकाग्रनिरुद्धावस्थयोर्वृत्तिनिरोधस्य योगत्वसंभवादेकतानं चित्तमेकाग्रमुच्यते निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धमिति भण्यते ।

स च समाधिर्द्विविधः । संप्रज्ञातासंप्रज्ञातभेदात् । तत्रैकाग्रचेतसि यः प्रमाणादिवृत्तीनां बाह्यविषयाणां निरोधः स संप्रज्ञातसमाधिः, सम्यक्प्रज्ञायतेऽस्मिन्प्रकृतेर्विविक्ततया चित्तमिति व्युत्पत्तेः । स चतुर्विधः सवितर्कादिभेदात् । समाधिर्नाम भावना, सा च भाव्यस्य विषयान्तरपरिहा[14]रेण चेतसि पुनः पुनर्निवेशनं, भाव्यं च द्विविधम्—ईश्वरस्तत्त्वानि च तान्यपि द्विविधानि जडाजडभेदात् । जडानि प्रकृतिमहदहंकारादीनि

१ ग. °न्यच्चापि । २ घ. त्तनिरो° । ३ घ. °क्षिप्तादिचित्तवृत्तेर्मूढा° । ४ घ. नत्वेत° । ५ क. ख. ग. °षु वि° । ६ क. ख. ग. घ. त्ति भावितं मू° । ७ घ. त्वास्थिरत्वविक्षेपयोगान्त° । ८ क. ग. °तत्त्वविक्षेपायोगान्त° । ९ च. °पा योगान्त° । १० ग. °दः । चि° । ११ क. ग. घ. स्मित्वं । १२ °पक्षे नि° । १३ च. °स्य योगत्वासं° । १४ घ. रे चे° ।

चतुर्विंशतिः । अजडः पुरुषः । तत्र यदा पृथिव्यादीनि स्थूलानि विषयत्वेनाऽऽदाय पूर्वापरानुसंधानेन शब्दार्थोल्लेख्यसंभेदेन[1] च भावना प्रवर्तते स समाधिः सवितर्कः, यदा तन्मात्रान्तःकरणलक्षणं सूक्ष्मं विषयमालम्ब्य देशाद्यवच्छेदेन भावना प्रवर्तते तदा सविचारः । यदा रजस्तमोलेशानुविद्धं चित्तं भाव्यते तदा सुखप्रकाशमयस्य सत्त्वस्योद्रेकात्सानन्दः, यदा रजस्तमोलेशानभिभूतं शुद्धं सत्त्वमालम्बनीकृत्य या प्रवर्तते भावना तदा[2] तस्यां[3] सत्त्वस्य[4] न्यग्भावाच्चितिशक्तेरुद्रेकाच्च सत्त्वमात्रावशेषत्वेन[5] सास्मितः समाधिः, वितर्कविचारानन्दा[6]स्मितारूपानुगमात्संप्रज्ञात इति सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः । ननु सर्ववृत्तिनिरोधो योग इत्युक्ते संप्रज्ञाते व्याप्तिर्न स्यात्तत्र सत्त्वप्रधानायाः सत्त्वपुरुषान्यथाख्यातिलक्षणाया वृत्तेरनिरोधादिति चेत्तदेतद्वार्तं[7] क्लेशकर्मविपाकाशयपरिपन्थिचित्तवृत्तिनिरोधो योग इत्यङ्गीकारात् । क्लेशाः पुनः पञ्चधा प्रसिद्धा अविद्यास्मितारागद्वेषाभिनिवेशाः ।

नन्वविद्येत्यत्र किमाश्रीयते पूर्वपदार्थप्राधान्यम्, अमक्षिकं वर्तत इतिवत्, उत्तरपदार्थप्राधान्यं वा राजपुरुष इतिवत्, अन्यपदार्थप्राधान्यं वाऽमक्षिको देश इतिवत् । तत्र न पूर्वः, पूर्वपदार्थप्रधानत्वेऽविद्यायां[8] प्रसज्यप्रतिषेधोपपत्तौ क्लेशादिकारकत्वानुपपत्तेः । अविद्याशब्दस्य[9] स्त्रीलिङ्गत्वाभावापत्तेश्च, न द्वितीयः, कस्यचिदभावेन विशिष्टाया विद्यायाः क्लेशादिपरिपन्थित्वेन तद्बीजत्वानुपपत्तेः । न तृतीयः, नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्चेति वृत्तिकारवचनानुसारेणाविद्यमाना विद्या यस्याः साऽविद्या बुद्धिरिति समाधिसिद्धौ तस्या अविद्यायाः क्लेशादिबीजत्वानुपपत्तेः । विवेकख्यातिपूर्वक[10]सर्ववृत्ति[11]संपन्नायास्तस्यास्तथात्वाप्रसङ्गाच्च । उक्तं चास्मितादीनां क्लेशानामविद्यानिदानत्वम्— अविद्याक्षेत्रत्वमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदा[12]राणामिति । तत्र प्रसुप्तत्वं प्रबोधसहकार्यभावेनानभिव्यक्तिः । तनुत्वं प्रतिपक्षभावनया शिथिलीकरणं, विच्छिन्नत्वं बलवता क्लेशेनाभिभवः, उदारत्वं सहकारिसंनिधिवशात्कार्यकारित्वम्[13] । तदुक्तं वाचस्पतिमिश्रेण व्यासभाष्यव्याख्यायाम्—

---

१ क. ख. ग. °न भा° । २ च. °दास° । ३ क. ख. ग. घ. तस्य । ४ घ. °स्य प्रयग्भा° । ५ क. ख. ग. घ. च. सत्तामा° । ६ °न्दात्मिकास्मि° । ७ घ. तदार्तं । ८ घ. °द्यायाः प्र° । ९ घ. °स्य तृतीयपत्तौ त्रिलि° । १० क. ख. °र्वप्रवृ° । ११ च. °त्तिनिरोधकसं° । १२ घ. °दारवमि° । छ. °दारणमि° । १३ घ. °म् । अत उक्तं ।

प्रसुप्तास्तत्त्वलीनानां तनुदग्धाश्च योगिनाम् ।
विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम् ॥ इति

द्वन्द्ववत्स्वतन्त्रपदार्थद्वयानवगमादुभयपदार्थप्रधानत्वं नाऽऽशङ्कितम् । तस्मात्पक्ष[3]द्वयेऽपि क्लेशादिनिदानत्वमविद्यायाः प्रसिद्धं हीयेतेति चेत्तदपि न शोभनं विभाति पर्युदासशक्तिमाश्रित्याविद्याशब्देन विद्याविरुद्धस्य विपर्ययज्ञानस्याभिधानमिति वृद्धैरङ्गीकारात् । तदाह—

नामधात्वर्थयोगे तु नैव नञ्प्रतिषेधकः ।
वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥ इति ।
वृद्धप्रयोग[6]गम्या हि शब्दार्थाः सर्व एव नः ॥
तेन यत्र प्रयुक्तो यो न तस्मादपनीयते ॥ इति ।

वाचस्पतिमिश्रैरप्युक्तं लोकाधीनावधारणो हि शब्दार्थयोः संबन्धः । लोके चोत्तरपदार्थप्रधानस्यापि नञ उत्तरपदाभिधेयोपमर्दकस्य तद्विरुद्धतया तत्र तत्रोपलब्धेरिहापि तद्विरुद्धे प्रवृत्तिरिति । एतदेवाभिप्रेत्योक्तम्—अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति । अतस्मिंस्तद्बुद्धिर्विपर्यय इत्युक्तं भवति । तद्यथाऽनित्ये घटादौ नित्यत्वाभिमानः । शुचौ कायादौ शुचित्वप्रत्ययः—

स्थानाद्बीजादवष्टम्भान्निष्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥ इति ।

परिणामतापसंस्कारै[11]र्गुणवृत्तिनिरोधा[12]च्च दुःखमेव सर्वं विवेकिन इतिन्यायेन दुःखे स्रक्चन्दनवनितादौ सुखत्वारोपः, अनात्मनि देहादावात्मबुद्धिः । तदुक्तम्—

अनात्मनि च देहादावात्मबुद्धिस्तु देहिनाम् ।
अविद्या तत्कृतो बन्धस्तन्ना[13]शे मोक्ष उच्यते ॥ इति ।

एवमियमविद्या चतु[14]ष्पादा भवति । नन्वेतेष्वविद्याविशेषेषु किंचिदनुगतं सामान्यलक्षणं वर्णनीयम्, अन्यथा विशेषस्यासिद्धेः । तथा चोक्तं भट्टाचार्यैः—

---

१ घ. °सुप्ततनुळी° । २ ग. °नत्वे ना° । ३ घ. °क्षत्रये° । ४ च. °धकृत् । व° । ५ ग. दन्त्यब्रा° । ६ क. ख. ग. घ. °गम्यो हि° । ७ क. ख. ग. घ. °ब्दार्थः स° । ८ च. °क्तोऽयं न° । ९ क. ग. °कत्वस्य । १० घं. °त्मज्ञातिर° । ११ क. ग. °गुणावृ° । १२ घ. °धाय दुः° । १३ क. ग. घ. °श्नाशो मो° । १४ क. ग. °तुष्पदा° ।

सामान्यलक्षणं[1] त्यक्त्वा विशेषस्यैव लक्षणम् ।
न शक्यं केवलं वक्तुमतोऽप्यस्य न वाच्यता ॥ इति ।

तदपि न वाच्यमतस्मिंस्तद्बुद्धिरिति सामान्यलक्षणाभिधानेन दत्तोत्तरत्वात् । सत्त्वपुरुषयोरहमस्मीत्येकताभिमानोऽस्मिता[2] । तदप्युक्तं—दृक्दर्शनशक्त्योरेकात्मत्वाभिमानोऽस्मितेति । सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकः सुखसाधनेषु तृष्णारूपो गर्धो रागः । दुःखज्ञस्य[3] तदनुस्मृतिपुरस्सरं तस्मात्साधनेषु निन्दा[4] द्वेषः । तदुक्तं—सुखानुशयी रागः, दुःखानुशयी द्वेष इति । किमत्रानुशयि[5]शब्दे ताच्छील्यार्थे णिनिरिनिर्वा मत्वर्थीयोऽभिमतः । नाऽऽद्यः सुप्यजातौ णिनिस्ताच्छील्य इत्यत्र सुपीति वर्तमाने पुनः सुब्ग्रहणस्योपसर्गनिवृत्त्यर्थत्वेन सोपसर्गाद्धातोर्णिनेरनुत्पत्तेः । यथाकथंचि[6]दङ्गीकारेऽपि अचो ञ्णितीति वृद्धिप्रसक्तावतिशय्या[7]दिपदवदनुशायिपदस्य प्रयोगप्रसङ्गात् । न द्वितीयः—

'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' ।

इति तत्प्रतिषेधादत्र चानुशयशब्दस्याजन्तत्वेन कृदन्तत्वात्तस्मादनुशयिशब्दो दुरुपपाद इति चेत्, नैतद्भद्रं [9]भावानव[10]बोधात्प्रायिकाभिप्रायमिदं वचनम् । अत एवोक्तं वृत्तिकारेण[11]—

'इतिकरणो विवक्षार्थः सर्वत्राभिसंबध्यते' इति ॥

तेन क्वचिद्भवति कार्यी[12] कार्यिकस्तण्डुली तण्डुलिक इति । तथा च कृदन्ताज्जातेश्च प्रतिषेधस्य प्रायिकत्वम्, अनुशयशब्दस्य कृदन्ततयेनेरुपपत्तिरिति सिद्धं, पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात्सर्वस्य प्राणभृन्मात्रस्याऽऽक्रमेरा[13] च विदुषः संजायमानः शरीरविषयादेर्मम वियोगो मा भूदिति प्रत्यहं निमित्तं विना प्रवर्तमानो भय[14]रूपोऽभिनिवेशः पञ्चमः क्लेशः । मा च भूवं हि भूयासमिति[15] प्रार्थनायाः प्रत्यात्ममनुभवसिद्धत्वात् । तदाह—स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेश इति । ते चाविद्यादयः पञ्च सांसारिकविविधदुःखोपहारहेतुत्वेन पुरुषं क्लिश्नन्तीति क्लेशाः प्रसिद्धाः ।

---

१ क. क्षणां मुक्त्वा° । ग. °क्षणं मुक्त्वा । २ घ. °स्मितेति । त° । ३ दुःखाभिज्ञ° । ४ घ. निवृत्तिर्द्वेषः । ५ च. नुगादिश° । ६ घ. °चित्तद° । ७ घ. °तिशाय्या° । ८ घ. °शयश° । ९ घ. भावनान° । १० बोधप्रायि° । घ. । ११ च. °ण । इतिकरणेन । इ° । १२ घ. कार्यं का° । च. कार्यं कार्यी कार्यकस्तरपुलिर्मण्डलि° । १३ क. °रा वि° । १४ घ. भवरू° । १५ घ. भूत्वा संतिष्ठामीति ।

कर्माणि विहितप्रतिषिद्धरूपाणि ज्योतिष्टोमब्रह्महत्यादीनि । विपाका[1]: कर्मफ[2]लानि जात्यायुर्भोगाः, आफलविपाकाच्चित्तभूमौ शेरत इत्याशया धर्माधर्मसंस्काराः । त[3]त्परिपन्थिचित्तवृत्तिनिरोधो योगः, निरोधो ना[4]भावमात्रमभिमतं[5] तस्य तुच्छत्वेन भाव[6]रूप[7]संस्कारजननक्षमत्वासंभवात्, किंतु तदाश्रयो मधुमतीमधु[8]प्रतीकाविशोकासंस्कार[9]शेषताव्यपदेश्यश्चित्तस्यावस्थाविशेषो निरुध्यन्तेऽस्मिन्प्रमाणाद्याश्चित्तवृत्तय इति व्युत्पत्तेरुपपत्तेः । अभ्यासवैराग्याभ्यां वृत्तिनिरोधस्तत्र[10] स्थितौ[11] यत्नोऽभ्यासः । प्रकाशप्रवृत्तिरूप[12]वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामविशेषः स्थितिः । तन्निमित्तीकृत्य यत्नः पुनः पुनस्तथात्वेन चेतसि निवेशनमभ्यासः । चर्मणि द्वीपिनं हन्तीतिवन्निमित्तार्थेयं सप्तमीत्युक्तं भवति । दृष्टानु[13]श्राविकविषय[14]वितृष्णस्य वशीकारसंज्ञा वैराग्यम् । ऐहिकपारत्रिकविषयादौ दोषदर्शनान्निरभिलाषस्य ममैते विषया[15] वश्या नाहमेतेषां वश्य इति विमर्शो वैराग्यमित्युक्तं भवति । समाधिपरिपन्थिक्लेशतनूकरणार्थं समाधिलाभार्थं च प्रथमं क्रियायोगविधानपरेण योगिना भावितव्यं क्रियायोगसंपादनेऽभ्यासवैराग्ययोः संभवात् ।

तदुक्तं भगवता—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ इति ।

क्रियायोगश्चोपदिष्टः पतञ्जलिना तपःस्वाध्यायेश्वरप्रणिधाना[16]नि क्रियायोग इति । तपःस्वरूपं निरूपितं याज्ञवल्क्येन—

विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं प्राहुस्तपसां तप उत्तमम् ॥ इति ।

प्रणवगायत्रीप्रभृती[17]नामध्ययनं स्वाध्याय इति । ते च मन्त्रा द्विविधाः, वैदिका[18]स्तान्त्रिकाश्च । वैदिकाश्च द्विविधाः प्रगीता अप्रगीताश्च । तत्र प्रगीताः सामानि, अप्रगीताश्च द्विविधाः, छन्दो बद्धास्तद्विलक्षणाश्च, तत्र प्रथमा ऋचो द्वितीया यजूंषि । तदुक्तं जैमिनिना तेषामृग्यत्रार्थवशेन

---

१ घ. विपाकः । २ क. °फलजा° । ३ च. तत्त्वप° । ४ क. ख. घ. °नामभा° । ५ ख. घ. °तं नत्वभावमात्रं त° । ६ ख °वसाक्षात्कारज° । ७ क. घ. °पसाक्षात्कारज° । ८ ख. धुराप्र° । ९ घ. °रविशेषाव्य° । १० ख. °त्र निवेशनमभ्या° । ११ क. ख. स्थितो । १२ क. °प प्रवृ° । १३ क. °नुश्रावि° । १४ घ. °षये वि° । १५ घ. °यान व° । १६ क. ख. घ. °नादि क्रि° । १७ ख. °तीनां मन्त्राणाम° । १८ घ. ° काश्चावैदि° ।

पादव्यवस्था गीतिषु सामाख्या, शेषे यजुःशब्द इति । तन्त्रेषु कामिकाकारणप्रपञ्चाद्यागमेषु ये ये वर्णितास्ते तान्त्रिकाः । ते पुनर्मन्त्रास्त्रिविधाः स्त्रीपुंनपुंसकभेदात् । तदाह—

स्त्रीपुंनपुंसकत्वेन त्रिविधा मन्त्रजातयः ।
स्त्रीमन्त्रा वह्निजायान्ता नमोन्ताः स्युर्नपुंसकाः ॥
शेषाः पुमांसस्ते शस्ताः सिद्धा वश्यादिकर्मणि । इति ।

स्नापनादिसंस्काराभावेऽपि निरस्तसमस्तदोषत्वेन सिद्धिहेतुत्वात्सिद्धत्वम् । स च संस्कारो दशविधः कथितः शारदातिलके—

मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः ।
निर्दोषतां प्रयान्त्याशु ते मन्त्राः साधु संस्कृताः ॥
जननं जीवनं चैव ताडनं बोधनं तथा ।
अभिषेकोऽथ विमलीकरणाप्यायने पुनः ॥
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।
मन्त्राणां मातृकावर्णादुद्धारो जननं स्मृतम् ॥
प्रणवान्तरितान्कृत्वा मन्त्रवर्णाञ्जपेत्सुधीः ।
मन्त्रार्णसंख्यया तद्धि जीवनं संप्रचक्षते ॥
मन्त्रवर्णान्समालिख्य ताडयेच्चन्दनाम्भसा ।
प्रत्येकं वायुबीजेन ताडनं तदुदाहृतम् ॥
विलिख्य मन्त्रवर्णास्तु प्रसूनैः करवीरजैः ।
मन्त्राक्षरेण संख्यातैर्हन्यात्तद्बोधनं मतम् ॥
स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये ॥
संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री विमलीकरणं हि तत् ॥
तारव्योमाग्निमनुयुग्ज्योतिर्मन्त्र उदाहृतः ।
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ॥
वारिबीजेन विधिवदेतदाप्यायनं मतम् ।
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं स्मृतम् ॥

---

१ क. घ° शेषं य° । २ क. ताडनादि° । ख. घ. स्नानादि° । ३ घ. °नं चैव बन्धनम् । अ° । ४ मू. दर्पणं । ५ क. ख. ग. घ. वर्गादु° । ६ क. °रेणासं° । ७ क. ख. घ. °मानिनियुतं ज्यो° । ८ ख. घ. °णं तदिति स्मृ° ।

तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ।
संस्कारा दश मन्त्राणां सर्वतन्त्रेषु गोपिताः ॥
यत्कृत्वा संप्रदायेन मन्त्री वाञ्छितमश्नुते ।
रुद्धकीलितविच्छिन्नसुप्तशप्तादयोऽपि च ॥
मन्त्रदोषाः प्रणश्यन्ति संस्कारैरेभिरुत्तमैः ॥ इति ।

तदलमकाण्डताण्डवकल्पेन मन्त्रशास्त्ररहस्योद्घोषणेन ।

ईश्वरप्रणिधानं नामाभिहितानामनभिहितानां च सर्वासां क्रियाणां परमेश्वरे परमगुरौ फलानपेक्षया समर्पणम् । अत्रेदमुक्तम्—

कामतोऽकामतो वाऽपि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि विन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥ इति ।

क्रियाफलसंन्यासोऽपि भक्तिविशेषापरपर्यायं प्रणिधानमेव फलाभिसंधानेन कर्मकरणात् । तथा च गीयते गीतासु भगवता—

कर्मण्येवाधिकारस्ते मा फलेषु कदा चन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ इति ।

फलाभिसंधेरुपघातकत्वमभिहितं भगवद्भिर्नीलकण्ठभारतीश्रीचरणैः—

अपि प्रयत्नसंपन्नं कामेनोपहतं तपः ।
न तुष्टये महेशस्य श्वलीढमिव पायसम् ॥ इति ।

सा च तपःस्वाध्यायेश्वरप्रणिधानात्मिका क्रिया योगसाधनत्वाद्योग इति शुद्धसारोपलक्षणावृत्त्याश्रयणेन निरूप्यते यथाऽऽयुर्घृतमिति । शुद्धसारोपलक्षणा नाम लक्षणाप्रभेदः । मुख्यार्थबाधतद्योगाभ्यामर्थान्तरप्रतिपादनं लक्षणा, सा द्विविधा रूढिमूला प्रयोजनमूला च, तदुक्तं काव्यप्रकाशे—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥ इति ।

तच्छब्देन लक्ष्यत इत्याख्याते गुणीभूतं प्रतिपादनमात्रं परामृश्यते । सा लक्षणेति प्रतिनिर्दिश्यमानापेक्षया तच्छब्दस्य स्त्रीलिङ्गत्वोपपत्तिः ।

---

१ क. तारयामारयोयोगो° । ख. तारया माययोर्योगो° । ग. तारश्रोंमारयायोगो° । २ घ. °रन्यामारयोर्योगो । ३ घ. जाप्यमानस्य । ४ घ. °मू । यत्रे° । ५ घ. °नेनाक° । ६ घ. °धेरपकारक° । ७ क. °यावकम् । घ. पावकम्° ।

तदुक्तं कैयटैः—निर्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमुपाददत इति। तत्र कर्मणि कुशल इत्यादिरूढिलक्षणाया उदाहरणं, कुशाल्लँतीति व्युत्पत्त्या दर्भादानकर्तरि यौगिकं कुशलपदं विवेचकत्वसारूप्यात्प्रवीणे प्रवर्तमानमनादिवृद्धव्यवहारपरम्परानुपातित्वेनाभिधानवत्प्रयोजनमनपेक्ष्य प्रवर्तते। तदाह—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ॥ इति।

तस्माद्रूढिलक्षणायाः प्रयोजनापेक्षा नास्ति। यद्यपि प्रयुक्तः शब्दः प्रथमं मुख्यार्थं प्रतिपादयति तेनार्थेनार्थान्तरं लक्ष्यत इति, अर्थधर्मोऽयं लक्षणा तथाऽपि तत्प्रतिपादके शब्दे समारोपितः सञ्शब्दव्यापार इति व्यपदिश्यते। एतदेवाभिप्रेत्योक्तं लक्षणाऽऽरोपिता क्रियेति। प्रयोजनलक्षणा तु षड्विधा, उपादानलक्षणा लक्षणलक्षणा गौणसारोपा गौणसाध्यवसाना शुद्धसारोपा शुद्धसाध्यवसाना चेति। कुन्ताः प्रविशन्ति मञ्चाः क्रोशन्ति गौर्वाहीकः। गौरयम्। आयुर्घृतम्। आयुरेवेदमिति यथा क्रममुदाहरणानि द्रष्टव्यानि। तदुक्तम्—

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥
सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा।
विषय्यन्तःकृतेऽन्यस्मिन्सा स्यात्साध्यवसानिका ॥
भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा ॥ इति।

तदलं काव्यमीमांसामर्मनिर्मन्थनेन। इति।

स च योगो यमादिभेदवशादष्टाङ्ग इति निर्दिष्टः। तत्र यमा अहिंसादयः। तदाह पतञ्जलिः—अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा इति। नियमाः शौचादयः। तदप्याह—शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति।

एते च यमनियमा विष्णुपुराणे दर्शिताः—

ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान्।
सेवेत योगी निष्कामो योग्यतां स्वं मनो नयन् ॥

---

१ क. ख. ग. घ. °र्मो यस्य ल°। २ क. ख. घ. °णसमारो। ३ च. °णाः। ४ क. ख. °र्वाहिकः। ५ ख. क्षणाचे°। ६ घ. °मंथने°। ७ क. ख. घ. °यमा°। ८ घ. °हिंसा च। ९ घ. °ग्रहाः। से°।

स्वाध्यायशौचसंतोषतपांसि नियमात्मवान् ।
कुर्वीत ब्रह्मणि परं परस्मिन्प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्तिताः ॥
विशिष्टफलदाः कामे निष्कामाणां विमुक्तिदाः॥ इति ।

स्थिरसुखमासनं पद्मासनभद्रासनवीरासनस्वस्तिकासनदण्डकासन सोपाश्रयपर्यङ्कक्रौञ्चनिषदनोष्ट्रनिषदनसमसंस्थानभेदाद्दशविधम् ।

पादाङ्गुष्ठौ निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ॥
पद्मासनं भवेदेतत्सर्वेषामभिपूजितम् ॥

इत्यादिना याज्ञवल्क्यः[3] पद्मासनादिस्वरूपं निरूपितवांस्तत्सर्वं तत एवावगन्तव्यम् । तस्मिन्नासनस्थैर्ये सति प्राणायामः प्रतिष्ठितो भवति । स च श्वासप्रश्वासयोर्गतिविच्छेदस्वरूपः । तत्र श्वासो नाम बाह्यस्य वायोरन्तरानयनम् । प्रश्वासः पुनः कोष्ठ्यस्य बहिर्निःसारणम् । तयोरुभयोरपि संचरणाभावः प्राणायामः । ननु नेदं प्राणायामसामान्यलक्षणं तद्विशेषेषु रेचकपूरककुम्भकप्रकारेषु तदनुगतेरयोगादिति चेन्नैष दोषः सर्वत्रापि श्वासप्रश्वासगतिविच्छेदसंभवात् । तथा हि कोष्ठ्यस्य वायोर्बहिर्निःसरणं रेचकः प्राणायामो यः प्रश्वासत्वेन प्रागुक्तः । बाह्यवायोरन्तर्धारणं चरमो यः श्वासरूपः । अन्तस्तम्भवृत्तिः कुम्भकः । यस्मिञ्जलमिव कुम्भे निश्चलतया प्राणाख्यो वायुरवस्थाप्यते । तत्र सर्वत्र श्वासप्रश्वासद्वयगतिविच्छेदोऽस्त्येवेति नास्ति शङ्कावकाशः । तदुक्तं तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायाम इति । स च वायुः सूर्योदयमारभ्य सार्धघटिकाद्वयं घटीयन्त्रस्थितघटभ्रमणन्यायेनैकैकस्यां नाड्यां भवति । एवं सत्यहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते । अत एवोक्तं मन्त्रसमर्पणरहस्यवेदिभिरजपामन्त्रसमर्पणे—

षट्शतानि गणेशाय षट्सहस्रं स्वयंभुवे ।
विष्णवे षट्सहस्रं च षट्सहस्रं पिनाकिने ॥

---

१ क. ख. ग. घ. ङ. च. °मानां वि° । २ घ. °निषाद । ३ घ. याज्ञवल्क्येन । ४ घ. °पितं तत्स° । ५ घ. स चोच्छ्वासप्र° । ६ घ. तत्रोच्छ्वासो । ७ घ. °ह्यस्य वा° । ८ घ. °णं पूरक उच्छ्वास° । ९ घ. °सयोर्द्वयोर्गति° ।

सहस्रमेकं गुरवे सहस्रं परमात्मने ।
सहस्रमात्मने चैवमर्पयामि कृतं जपम् ॥ इति ।

तथा नाडीसंचारणदशायां वायोः संचरणे पृथिव्यादीनि तत्त्वानि वर्णविशेषवशात्पुरुषार्थाभिलाषुकैः पुरुषैरवगन्तव्यानि । तदुक्तमभियुक्तैः—

सार्धं घटीद्वयं नाडीरेकैकार्कोदयाद्वहेत् ।
आरघट्टघटीभ्रान्तिन्यायो नाड्योः पुनः पुनः ॥
शतानि तस्य[3] जायन्ते निश्वासोच्छ्वासयोर्नवं[4] ।
खखषटकैर्द्विकैः संख्याऽहोरात्रे सकले पुनः ।
षट्त्रिंशद्गुणवर्णानां या वेला भणने भवेत् ।
सा वेला मरुतो नाड्यन्तरे संचरतो भवेत् ॥
प्रत्येकं पञ्च तत्त्वानि नाड्योश्च वहमानयोः ।
वहन्त्यहर्निशं तानि ज्ञातव्यानि यतात्मभिः ॥
ऊर्ध्वं वह्निरधस्तोयं तिरश्चीनः समीरणः ।
भूमिमर्धपुटे व्योम सर्वगं प्रवहेत्पुनः ॥
वायोर्वह्नेरपां पृथ्व्या व्योम्नस्तत्त्वं वहेत्क्रमात् ।
वहन्त्योरुभयोर्नाड्योर्ज्ञातव्योऽयं[12] यथाक्रमम् ॥
पृथ्व्याः पलानि पञ्चाशच्चत्वारिंशत्तथाऽम्भसः ।
अग्नेस्त्रिंशत्पुनर्वायोर्विंशतिर्नभसो दश ॥
प्रवाहकालसंख्येयं हेतुर्विह्वलयोरथ ।
पृथ्वी पञ्चगुणा तोयं चतुर्गुणमथानलः ॥
त्रिगुणो[14] द्विगुणो वायुर्वियदेकगुणं भवेत् ।
गुणं[15] प्रतिदशपलान्युर्व्यां पञ्चाशदित्यतः ॥
एकैकहानिस्तोयादेस्तथा पञ्च गुणाः क्षितेः ।
गन्धो रसश्च रूपं च स्पर्शः शब्दः क्रमादमी ॥

---

१ क. योश्चर° ख. °योः पृथिव्यादिनिःसंचारणं चित्तावस्थावर्णविशेषकरणेऽत्र वशा° । घ. °योः पृथिव्यादिनि संचरणं चित्तावस्थावर्ण विशेषकरणवशा° । २ ख. घ. °कात्रोद° । ३ क. ख. ग. घ. तत्र । ४ च. °व स्वस्वषट्करैः सं° । ५ घ. करकैः । ६ च. °द्गुरुव° । ७ च. °तो नाड्यां नाड्यांसं° । क. ख. नाड्यां संचरतो गलत् । ८ घ. नाड्यां प्रत्येकं च° । ९ घ. °गलतः° । १० घ. °रधो वारि ति° । ११ घ. सर्वगः । १२ च. °यं क्रमः सदा । पृ° । १३ क. ख. °तु बहुल° । घ. °तुबह्ल° ! १४ क. ख. ग° घ. °णोऽथ भवेद्वायु° । १५ क. ख. ग. घ. °तिपलदशानुर्व्यां° ।

तत्त्वाभ्यां भूजलाभ्यां स्याच्छान्तिकार्ये फलोन्नतिः ।
दीप्तास्थिरो[2]ब्धिकाकृत्ये तेजोवाय्वम्ब[3]रे तु च ॥
पृथ्व्यप्तेजोमरुद्व्योमतत्त्वानां चिह्नमुच्यते ।
आद्ये स्थैर्यं स्वचित्तस्य शैत्ये कामोद्भवो भवेत् ॥
तृतीये कोपसंतापौ चतुर्थे चञ्चलात्मता ।
पञ्चमे शून्यतैव स्यादथवा धर्मवासना ॥
श्रुत्योरङ्गुष्ठकौ मध्याङ्गुल्यौ नासापुटद्वये ।
सृक्किण्योः प्रान्त्यकोपान्त्याङ्गुली शेषे दृगन्तयोः ॥
न्यस्यान्तर्भूपृथिव्यादितत्त्वज्ञानं भवेत्क्रमात् ।
पीतश्वेतारुणश्यामैर्बिन्दुभिर्निरुपाधि[4] खम् ॥ इत्यादिना ।

यथावद्वायुतत्त्वमवगम्य तन्नियमने विधीयमाने विवेकज्ञानावरण-कर्मक्षयो भवति । तपो न परं प्राणायामादिति ।

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
प्राणायामैस्तु दह्यन्ते तद्वदिन्द्रियपन्नगाः ॥ इति च ।

तदेवं यमादिभिः संस्कृतमनस्कस्य योगिनः संय[7]मप्रत्याहारः कर्तव्यः । चक्षुरादीनामिन्द्रियाणां प्रतिनियतरञ्जनीयकोपनीयमोहनीयप्रवणत्व-प्रहाणेनाविकृतस्वरूपप्रवणचित्तानुकारः प्रत्याहारः । इन्द्रियाणि विष-येभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः । ननु तदा चित्तमभिनिवि-शते नेन्द्रियाणि तेषां बाह्यविषयत्वेन तत्र सामर्थ्याभावादतः कथं चित्तानुकारोऽद्धाऽत एव वस्तुतस्तस्यासंभवमभिसंधाय सादृश्यार्थमिव-शब्दं चकार सूत्रकारः स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रि-याणां प्रत्याहार इति । सादृश्यं च चित्तानुकारनिमित्तं विषयासंप्रयोगः । यदा चित्तं निरुध्यते तदा चक्षुरादीनां निरोधे प्रयत्नान्तरं नापेक्षणीयं यथा मधुकरराजं मधुमक्षिका अनुवर्तन्ते तथेन्द्रियाणि चित्तमिति । तदुक्तं विष्णुपुराणे—

शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ इति ।
वश्यता परमा तेन जायतेऽतिचलात्मनः ।
इन्द्रियाणामवश्यैस्तैर्योगी योगस्य साधकः ॥ इति ।

१ च. स्थिताब्धि° । क. राधिका । २ ख. °रादिका° । ग. °राधिका° । ३ क. ख. घ. °म्बरं भुवः । ग. °म्बरेषु च । ४ ख. °धिकाम् । ङ° । ५ च. °ने भवेत् । तत्त्वज्ञा° । ६ घ. °यजामलाः । ङ° । ७ घ. °यमाय प्र° । ८ ख. ब. °दिषु प्रसक्ता° ।

नाभिचक्रहृदयपुण्डरीकनाड्यग्रादावाध्यात्मिके हिरण्यगर्भवासप्रजापतिप्रभृतिके बाह्ये वा देशे चित्तस्य विषयान्तरपरिहारेण स्थिरीकरणं धारणा । तदाह देशबन्धश्चित्तस्य धारणेति । पौराणिकाश्च—

प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रयम् ॥ इति ।

तस्मिन्देशे ध्येयावलम्बनस्य प्रत्ययस्य विसदृशप्रत्ययप्रहाणेन प्रवाहो ध्यानं, तदुक्तं—तत्र प्रत्ययैकतानता ध्यानमिति । अन्यैरप्युक्तम्—

तद्रूपप्रत्ययैकाग्र्या[3] संततिश्चान्यनिःस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते तथा ॥ इति ।

प्रसङ्गाच्चरममङ्गं प्रागेव प्रत्यपीपदाम ।

तदनेन योगाङ्गानुष्ठानेनाऽऽदरनैरन्तर्यदीर्घकालसेवितेन समाधिप्रतिपक्षक्लेशप्रक्षयेऽभ्यासवैराग्यवशान्मधुमत्यादिसमाधिलाभो भवति ।

अथ किमेवमकस्मादस्माननतिविकटाभिरत्यन्ताप्रसिद्धाभिः कर्णाटगौडलाटभाषाभिर्भीषयते भवान् । नहि वयं भवन्तं भीषयामहे किंतु मधुमत्यादिपदार्थव्युत्पादनेन तोषयामः, ततश्चाकुतोभयेन भवता श्रूयतामवधानेन । तत्र मधुमती नामाभ्यासवैराग्यादिवशादपास्तरजस्तमोलेशसुखप्रकाशमयसत्त्वभावनयाऽनवद्यवैशारद्यविद्योतनरूपऋतंभरप्रज्ञाख्या समाधिसिद्धिः । तदुक्तम्—ऋतंभरा तत्र प्रज्ञेति । ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेणाऽऽच्छाद्यते । तत्र स्थितौ दार्ढ्ये सति द्वितीयस्य योगिनः सा प्रज्ञा भवतीत्यर्थः । चत्वारः खलु योगिनः प्रसिद्धाः प्राथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति । तत्राभ्यासी प्रवृत्तिमात्रज्योतिः प्रथमः । न त्वनेन परचित्तादिगोचरज्ञानरूपं वै ज्योतिर्वशीकृतमित्युक्तं भवति । ऋतंभरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः । परवैराग्यसंपन्नश्चतुर्थः । मनोजवित्वादयो मधुप्रतीकसिद्धयः । तदुक्तं मनोजवित्वं विकरणाभावः प्रधानजयश्चेति । मनोजवित्वं नाम कायस्य मनोवदुत्तमो[11] गतिलाभः । विकरणा[12]भावः कायनिरपेक्षाणामिन्द्रियाणामभिमतदेशकालविषयापेक्षवृत्तिलाभः

---

१ क. ख. ग. °श्रय इति । २ घ. स्य विप्र° । ३ क. ग. °काग्र्यस° । ४ च. °निष्प्रभात° । ५ ख. °दरं नै° । ६ घ. कालसे° । ७ ख. °राग्यव° । ८ क. °भरा तत्र प्र° । ९ क. °रूप्यं वै° । १० क. ख. ग. घ. °रणभा° । ११ क. घ. °वदनुतमो° । ख. मनुवदनोतमो° । ग. °वदनुत्तमो° । १२ क. ख. ग. घ. °रणभा° ।

प्रधानजयः प्रकृतिविकारेषु सर्वेषु वशित्वम् । एताश्च सिद्धयः करणपञ्चकस्वरूपजयात्तृतीयस्य योगिनः प्रादुर्भवन्ति, यथा मधुन एकदेशोऽपि स्वदते तथा प्रत्येकमेव ताः सिद्धयः स्वदन्त इति मधुप्रतीका सर्वभावाधिष्ठातृत्वादिरूपादिरूपा विशोका सिद्धिः । तदाह सत्त्वपुरुषान्यथाख्यातिमात्रप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञत्वं चेति । सर्वेषां व्यवसायाव्यवसायात्मकानां गुणपरिणामरूपाणां भावानां स्वामिवदाक्रमणं सर्वभावाधिष्ठातृत्वं तेषामेव शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां विवेकज्ञानं सर्वज्ञातृत्वम् । तदुक्तं विशोका वा ज्योतिष्मतीति । सर्ववृत्तिप्रत्यस्तमये परं वैराग्यमाश्रितस्य जात्यादिबीजानां क्लेशानां निरोधसमर्थो निर्बीजः समाधिरसंप्रज्ञातपदवेदनीयः संस्कारशेषताव्यपदेश्यश्चित्तस्यावस्थाविशेषः । तदुक्तं विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य इति । एवं च सर्वतो विरज्यमानस्य तस्य पुरुषधौरेयस्य क्लेशबीजानि च निर्दग्धशालिबीजकल्पानि प्रसवसामर्थ्यविधुराणि मनसा सार्धं प्रत्यस्तं गच्छन्ति । तदेतेषु प्रलीनेषु निरुपप्लवविवेकख्यातिपरिपाकवशात्कार्यकारणात्मकानां प्रधाने लयः । चितिशक्ति[14]स्वरूपप्रतिष्ठा पुनर्बुद्धि[11]सत्त्वाभिसंबन्धविधुरा[12] कैवल्यं [13]लभत इति । सिद्धिद्वयी च मुक्तिरुक्ता पतञ्जलिना—पुरुषार्थ[15]शून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । न चास्मिन्सत्यपि कस्मान्न [16]जायते जन्तुरिति वदितव्यं कारणाभावात्कार्याभाव इति प्रमाणसिद्धार्थे नियोगानुयोगयोरयोगात् । अपरथा कारणाभावेऽपि कार्यसंभवे मणिवेधादयोऽन्धादिभ्यो भवेयुः । तथा चानुपपन्नार्थताया[17]माभाणको लौकिक उपपन्नार्थो भवेत् । तथा च श्रुतिः—अन्धो मणिमविन्दत् । तमनङ्गुलिरावयत् । अग्रीवः प्रत्यमुञ्चत् । तमजिह्वा असश्चत ( तै०आ०१।११ ) अभ्यपूजयत्स्तुतवानिति यावत् । एवं च चिकित्साशास्त्रवद्योगशास्त्रं

---

१ ख. प्रधानवि° । २ च. °म् । श्रुताश्च । ३ ङ. °वाद्यधि° । ४ घ. °पावि° । ५ क. घ. वसेया° । ६ घ. °त्मकगु° । ७ घ. °मयप° । ८ ख. °रता° । ९ क. ख. °रामः प्र° । १० घ. ग्धबीजनिर्दग्धशा° । ११ क. ग. °सत्त्वाभि° । १२ घ. °रा वा कैवल्यं लभ्यत° । १३ क. ख. लभ्यते । १४ च. °ति सिद्धम् । सि° । १५ घ. °ति । नाङ्गास्मि° । १६ घ. जयति । १७ घ. °या आभा° । १८ ख. उभयत्रार्थो° ।

चतुर्व्यूहं यथा चिकित्साशास्त्रं रोगो रोगहेतुरारोग्यं[1] भेषजमिति तथेदमपि[2] संसारहेतुर्मोक्षो मोक्षोपाय इति। तत्र दुःखमयः संसारो हेयः प्रधानपुरुषयोः संयोगो हेयभोगहेतुस्तस्याऽऽत्यन्तिकी निवृत्तिर्हानं तदुपायः सम्यग्दर्शनम्। एवमन्यदपि शास्त्रं यथासंभवं चतुर्व्यूहमूहनीयमिति सर्वमवदातम्॥ +

इति सर्वदर्शनसंग्रहे पातञ्जलदर्शनम्॥

---

+ इतः परं सर्वदर्शनशिरोमणिभूतं शांकरदर्शनमन्यत्र लिखितमित्यत्रोपेक्षितमिति। इयं पङ्क्तिः पुस्तकेषु वर्तते।

१ ख. °ग्यं तदुपायो भे°। २ क. ग. घ. °पि संसारः सं°। ख. °पि संसारास°।

# अथ शांकरदर्शनम् ॥ १६ ॥

सोऽयं परिणामवादः प्रामाणिकगर्हणमर्हति । न ह्यचेतनं प्रधानं चेतनानधिष्ठितं प्रवर्तते । सुवर्णादौ रुचकाद्युपादाने हेमकारादिचेतनाधिष्ठानोपलम्भेन नित्यत्वसाधककृतकत्ववत्सुखदुःखमोहात्मनाऽन्वितत्वादेः साधनस्य साध्यविपर्ययव्याप्ततया विरुद्धत्वात्स्वरूपासिद्धत्वाच्च । आन्तराः खल्वमी सुखदुःखमोहा बाह्येभ्यश्चन्दनादिभ्यो विभिन्नप्रत्ययवेदनीयेभ्यो व्यतिरिक्ता अध्यक्षमीक्ष्यन्ते । यद्यमी सुखादिस्वभावा भवेयुस्तदा हेमन्तेऽपि चन्दनः सुखः स्यान्न हि चन्दनः कदाचिदचन्दनः । तथा निदाघेष्वपि कुङ्कुमपङ्कः सुखो भवेन्न ह्यसौ कदाचिदकुङ्कुमपङ्क इति । एवं कण्टकः क्रमेलकस्येव मनुष्यादीनामपि प्राणभृतां सुखः स्यान्नह्यसौ कांश्चित्प्रत्येव कण्टक इति । तस्माच्चन्दनकुङ्कुमादयो विशेषाः कालविशेषाद्यपेक्षया सुखादिहेतवो न तु सुखादिस्वभावा इति रमणीयम् । तस्माद्धेतुरसिद्ध इति सिद्धम् । नापि श्रुतिः प्रधानकारणत्ववादे प्रमाणम् । यतः—"यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" ( छा० ६।४।१ ) इति च्छान्दोग्यशाखायां तेजोबन्नात्मिकायाः प्रकृतेर्लोहितशुक्लकृष्णरूपाणि समाम्नातानि तान्येवात्र प्रत्यभिज्ञायन्ते । तत्र श्रौतप्रत्यभिज्ञायाः प्राबल्याल्लोहितादिशब्दानां मुख्यार्थसंभवाच्च तेजोबन्नात्मिका जरायुजाण्डजस्वेदजोद्भिज्जचतुष्टयस्य भूतग्रामस्य प्रकृतिरवसीयते । यद्यपि तेजोबन्नानां प्रकृतेर्जातत्वेन योगवृत्त्या न जायत इत्यजत्वं न सिध्यति तथाऽपि रूढिवृत्त्यावगतमजात्वमुक्तप्रकृतौ सुखाववोधाय प्रकल्प्यते । यथाऽसावादित्यो वा देवमध्वित्यादिवाक्येनाऽऽदित्यस्य मधुत्वं परिकल्प्यते तथा तेजोबन्नात्मिका प्रकृतिरेवाजेति । अजामेकामित्यादिका श्रुतिरपि न प्रधानप्रतिपादिका । यदवादि निदर्श-

१ ग. °दौकटका' । २ क. °त्वसा° । ३ ख. ग. 'सुखदुःखादि° । ४ क. ग. विच्छिन्न° । ५ ख. °न्ते विचन्दनः सदा विचन्दनः स्यात्तदानि° । ६ ख. °ज्ञायां प्रा° । ७ ख. 'न्नात्मकज° । ८ क. तदाऽपि । ९ ख. परिकल्प्यते ।

नमपूर्ववादिना क्षीरादिकमचेतनं चेतनानधिष्ठितमेव वत्सविवृद्ध्यर्थं प्रवर्तत इति । नैतद्रमणीयम् । बुद्धिविशेषशालिनः परमेश्वरस्य तत्राप्यधिष्ठातृत्वाभ्युपगमात् । न च परमेश्वरस्य करुणया प्रवृत्त्यङ्गीकारे प्रागुक्तविकल्पावसरः । सृष्टेः प्राक्प्राणिनां दुःखसंबन्धासंभवेऽपि तन्निदानादृष्टसंबन्धसंभवेन तत्प्रहाणेच्छया प्रवृत्त्युपपत्तेः । किं च पुरुषार्थप्रयुक्ता प्रधानप्रवृत्तिरित्युक्तं तद्विवेक्तव्यम् । किं प्रधानं केवलं भोगार्थं प्रवर्तते किं वा केवलमोक्षार्थम्, आहोस्विदुभयार्थम् । न तावदाद्यः कल्पोऽवकल्पते । अनाधेयाशयस्य कूटस्थनित्यस्य पुरुषस्य तात्त्विकभोगासंभवादनिर्मोक्षप्रसङ्गाच्च । येन हि प्रयोजनेन प्रधानं प्रवर्तितं तदनेन विधातव्यम् । भोगेन चैतत्प्रवर्तितमेतमेव विदध्यान्न मोक्षमिति । नापि द्वितीयः । चिद्धातोर्नित्यशुद्धबुद्धमुक्तस्वभावतया कर्मानुभववासनानामसंभवेन प्रधानप्रवृत्तेः प्रागपि मुक्ततया तदर्थं प्रवृत्त्यनुपपत्तेः । शब्दाद्युपभोगार्थमप्रवृत्तत्वेन प्रधानस्य तदजनकत्वप्रसङ्गाच्च । नापि तृतीयः । प्रागुक्तदूषणलङ्घनालङ्घितत्वात्प्रवृत्तिस्वभावायाः प्रकृतेरौदासीन्यायोगाच्च । ननु स्वपुरुषान्यताख्यातिः पुरुषार्थस्तस्यां जातायां सा निवर्तते कृतकार्यत्वादिति चेत्तदसमञ्जसम् । अचेतनायाः प्रकृतेर्विचार्य कार्यकारित्वायोगात् । यथेयं कृतेऽपि शब्दाद्युपलम्भे तदर्थं पुनः प्रवर्तत एवमत्रापि पुनः प्रवर्तेत स्वभावस्यानपायात् । किं च सा प्रकृतिर्विवेकख्यातिवशादुच्छिद्यते न वा । उच्छेदे सर्वस्य संप्रति संसारोऽस्तमियात् । अनुच्छेदे न कस्यचिन्मोक्षः । ननु प्रधानाभेदेऽपि तत्तत्पुरुषाविवेकख्यातिलक्षणाविद्यासदसत्त्वनिबन्धनौ बन्धमोक्षावुपपद्येयातामिति चेद्धन्त तर्हि कृतं प्रकृत्यां । अविद्यासदसद्भावाभ्यामेव तदुपपत्तेः । नन्वविद्यापक्षेऽपि एष दोषः प्रादुःष्यादिति चेत्तदेतत्प्रत्यवस्थानमस्थाने । न हि वयं प्रधानवदविद्यां सर्वेषु जीवेष्वेकामाचक्ष्महे येनैवमुपालभ्येमहि । अपि त्वियं प्रतिजीवं भिद्यते । तेन यस्यैव जीवस्य विद्योत्पद्यते तस्यैवाविद्या समुच्छिद्यते नान्यस्य । भिन्नायतनयोस्तयोर्विरोधाभावात् । अतो न समस्तसंसारोच्छेदप्रसङ्गदोषः । तस्मात्परिणामः परित्यक्तव्यः स्वीकर्तव्यश्च विवर्तवादः । ननु जीवजडयोः सारूप्याभावेन चिद्विवर्तत्वं प्रपञ्चस्य न संपरिपद्यत इति प्रागवा-

---

१ क. °दिसाक्षी° । २ क. °नाधि° । ३ ख. लङ्घातत्वा° । ४ ख. °कृतेः कादाचित्कत्वायो° । ५ क. अतनु° । ६ ख. विद्यासदसत्त्वनौबन्ध° । ७ क. °त्यामवि° । ८ ख. धानाव° । ९ क. °लम्भेम° । १० ख. °पद्य° ।

दृष्टेति चेन्नैतत्साधु । न हि सारूप्यनिबन्धनाः सर्वे विभ्रमा इति व्याप्तिरस्ति । असद्रूपादपि कामादेः कान्तालिङ्गनादि[1]ष्विव स्वप्नविभ्रमस्योपलम्भात् । किं च कादाचित्के विभ्रमे सारूप्यापेक्षा नाना[2]द्यविद्यानिबन्धने प्रपञ्चे । तदवो[3]चदाचार्यवाचस्पतिः—

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ इति ।

तदेतत्सर्वं वेदान्तशास्त्रपरि[4]श्रमशालिनां सुगमं सुघटं च । तच्च वेदान्तशास्त्रं चतुर्ल[5]क्षणम् । भगवता बादराय[6]णेन प्रणीतस्य वेदान्तशास्त्रस्य प्रत्यग्ब्रह्मैक्यं विषय इति शंकराचार्याः प्रत्य[7]पीपदन् । तत्र प्रथमे समन्वयाध्याये सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्येण पर्यवसानम् । द्वितीयेऽविरोधाध्याये सांख्यादितर्कविरोधनिराकरणम् । तृतीये साधनाध्याये ब्रह्मविद्यासाधनम् । चतुर्थे फलाध्याये विद्याफलम् । तत्र प्रत्यध्यायं पादचतुष्टयम् । तत्र प्रथमस्याध्यायस्य प्रथमे पादे स्पष्टब्रह्मलिङ्गं वाक्यजातं मीमांस्यते । द्वितीयेऽस्पष्टब्रह्मलिङ्गमुपास्यविषयम् । तृतीये तादृशं द्वितीज्ञेयविषयम् । चतुर्थे[8]ऽव्यक्ताजापदादिसंदिग्धं पदजातमिति । द्वितीयस्य प्रथमे सांख्ययोगकणादादिस्मृतिविरोधपरिहारः । अविरोधस्य द्वितीये सांख्यादिमतानां दुष्टत्वम् । तृतीये पञ्चमहाभूतश्रुतीनां जीवश्रुतीनां च परस्परविरोधपरिहारः । चतुर्थे लिङ्गशरीरश्रुतीनां विरोधपरिहारः । तृतीयस्य प्रथमे जीवस्य परलोकगम[9]नागमनपुरःसरं वैराग्यम् । द्वितीये त्वंपदतत्पदार्थपरिशोधनम् । तृतीये सगुणविद्यासु गुणोपसंहारः । चतुर्थे निर्गुणब्रह्मविद्या बहिरङ्गान्तरङ्गा[10]श्रमयज्ञादिसाधनजातम् । चतुर्थस्य प्रथमे ब्रह्मसाक्षात्कारेण जीवतः पापपुण्यक्लेशवैधुर्यलक्षणा मुक्तिः । द्वितीये मरणोत्क्रमणप्रकारः । तृतीये सगुणब्रह्मोपासकस्योत्तरमार्गः । चतुर्थे निर्गुणसगुणब्रह्मविदो विदेहकैवल्यब्रह्मलोकावस्थानानि । तदित्थं ब्रह्मविचारशास्त्राध्या[11]यपादार्थसंग्रहः । तत्र प्रथममधिकरणमथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसारम्भोपपादनपरम् । अधिकरणं च पञ्चावयवं प्रसिद्धम् । ते च विषयादयः पञ्चावयवा निरूप्यन्ते । आत्मा वाऽरे द्रष्टव्य इ[12]त्येतद्वाक्यं विषयः । ब्रह्म जिज्ञासितव्यं न वेति संदेहः । जिज्ञा-

---

१ ख. °दिष्वस्व° । २ ख. °नावि° । ३ ख. °चवदा° । ४ क. °रिश्रम° । ५ ख. °क्षणं भ° । ६ ख. ग. ञाणायितस्य । ७ क. °त्यक्पंद त° । ८ ख. °व्यक्तसं । ९ ख. ग. °मनलगमनविचारपु° । १० क. °श्रयज्ञा° । ११ क. °यपदा° । १२ क. इत्यत्रैत° ।

स्यत्वव्यापकयोः संदेहप्रयोजनयोः संभवासंभवाभ्याम् । तत्र कस्येदं जिज्ञास्यत्वमवगम्यते । अहमनुभवगम्यस्य श्रुतिगम्यस्य वा । नाऽऽद्यः । सर्वजनीनेनाहमनुभवे[1]नेदमास्पददेहादिभ्यो विवेकेनाऽऽत्मनः स्पष्टं प्रतिभासमानत्वात् । ननु स्थूलोऽहं कृशोऽहमित्यादिदेहधर्मसामानाधिकरण्यानुभवादध्यस्तात्मभावदेहालम्बनोऽयमहंकार इति चेन्न । बाल्याद्यवस्थासु भिन्नपरिमाणतया बदरा[2]मलकादिवत्परस्परभेदेन शरीरस्य प्रत्यभिज्ञानानुपपत्तेः । अथोच्येत यथा पीलुपाकपक्षे पिठरपाकपक्षे वा काल[3]भेदेनैकास्मिन्वस्तुनि पाकजभेदो युज्यते तथैकस्मिञ्शरीराभिधे कालभेदेन परिमाणभेदः । अत एव लौकिकाः शरीरमात्मनः सकाशादभिन्नं प्रतिपद्यमानाः प्रत्यभिजानते चेति । न तद्भद्रम् । मणिमन्त्रौषधाद्युपायभेदेन भूमिकाधानवन्नानाविधान्देहान्प्रतिपद्यमानस्याहमालम्बनस्य भिन्नस्याऽऽत्मनः शरीराद्भेदेन भासमानत्वात् । अत एव चक्षुरादीनामप्यहमालम्बनत्वमशक्यशङ्कम् । नान्यदृष्टं स्मरत्यन्य इति न्यायेन चक्षुरादौ नष्टेऽपि रूपादिप्रतिसंधानानुपपत्तेः । नाप्यन्तःकरणस्याहमालम्बनत्वमास्थेयम् । अयमेव भेदो[4] भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति न्यायेन कर्तृकरणभूतयोरात्मान्तःकरणभूतयोस्तक्षवासिवत्संभेदासंभवात् । यद्य[5]भेदं एव नाऽऽद्रियते तर्हि स्थूलोऽहं कृशोऽहं कृष्णोऽहमित्यादि संख्यानमुत्सन्नसंकथम्[6] । न स्यादेवं लोके शास्त्रे चोभयथा[7]शब्दप्रयोगदर्शनेन मुख्यार्थत्वानुपपत्तौ मञ्चाः क्रोशन्तीत्यादिवदौ[8]पचारिकत्वेनोपपत्तेः । तथा[9] चेदमनुमानं समसूचि । विमतमजिज्ञास्यमसंदिग्धत्वात्करतलामलकवत् । तथा फलं न फलभावमीक्षते । पुरुषैरर्थ्यत इति व्युत्पत्त्या निःशेषदुःखोपशमलक्षितं[10] परमानन्दैकरस्यं च पुरुषार्थशब्दस्यार्थः सकलपुरुषधौरेयैः प्रेप्स्यते नेतरत्सांसारिकं[11] सुखजातम् । तस्यैहिकस्य पारलौकिकस्य च सातिशयतया[12] च सदृक्षतया च प्रेक्षावद्भिरर्थ्यमानत्वानुपपत्तेः । यत्तत्परिपान्थि दुःखजातं तज्जिहास्यते । तच्चाविद्यापरपर्यायसंसार एव । कर्तृत्वादिसकलानर्थकरत्वादविद्यायाः[13] सत्येकीकरणे वर्तते

१ ख. °वेन दे° । २ ख. °रामलका° । ३ घ. काल–भेदेनप्रारिगाणमेदः अत एव लौकिकाः शरीर मात्मनः सकाशदभिन्नं प्रतिपद्यमाना प्रत्यभिजानतेचेति न तद्भद्रं मणिमन्त्रौषधाद्यपाय भेदेन । ४ ख. भेदा भेददेतुमान्य° । ५ ख. °दपदं नाऽऽद्रियेत तार्हि । ६ ख. °न्नं संकथंक° । ७ ख. °यताशब्दप्रयोगदर्श° । ८ ख. °दिवदौप° । ९ ख. था चफ° । १० ख. °शमोपलक्षत्वं प° । ११ ख. ते नैतान्सांसा° । १२ ख. °शयतथास्तप्रेक्ष° । १३ ख. °द्यायासत्येक° ।

संभेदादौ तथा चोपलम्भात्। तथा चाऽऽत्मानं देहेनैकीकृत्य स्वर्गनरकमार्गयोः सरति येन पुरुषः स संसारोऽविद्याशब्दार्थस्तन्निवृत्तिः फलं फलवतामभिमतम्। तथा कथितम्—

अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः॥ इति।

तच्च काशकुशावलम्बनकल्पम्। आत्मयाथात्म्यानुभवेन सह वर्तमानस्य संसारस्य रूपरसवद्विरोधाभावेन निवर्त्यनिवर्तकभावाभावात्। ननु सहानुवर्तमानो बोधः संसारं मा बाधिष्ट, सहावर्तमानस्तु बोधः प्रकाशस्तमोवद्बाधिष्यत इति चेत्तदेतद्रिक्तं वचः। अहमनुभवादन्यस्याऽऽत्मज्ञानस्य मूषिकविषाणायमानत्वात्। नन्वन्योऽयमनुभवः पामराणां मा स्म भवन्नाम, वेदान्तवचननिचयपर्यालोचनपक्षाणां परीक्षकाणां संभवत्येवेत्यपि न वक्तव्यम्। अबाधितानुभवविरोधेन वेदान्तवाक्यानां ग्रावप्लवनादिवाक्यकल्पत्वात्। न ह्यागमाः परः शतं घटं पटयितुमुत्सहन्ते। न चाध्ययनविधिव्याकोपः। गुरुमतानुसारेण हुंफडादिवाक्यवज्जपमात्रोपयोगित्वेनाऽऽचार्यमतानुसारेण वा यजमानः प्रस्तर इत्यादिवाक्यवत्स्तावकत्वेन वेदान्तसिद्धान्तस्याध्येतव्यत्वसंभवात्। तथा च प्रयोगः—विवादास्पदं ब्रह्म विचार्यपदं न भवत्यफलत्वात्काकदन्तवदिति। तदाहुराचार्याः—

अहंधियाऽऽत्मनः सिद्धेस्तस्यैव ब्रह्मभावतः।
तज्ज्ञानान्मुक्त्यभावाच्च जिज्ञासा नावकल्पते॥ इति।

न चाभेदेनाध्यस्तदेहादिनिवृत्तिः फलमित्यफलत्वहेतुरसिद्ध इति वेदितव्यम्। व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति न्यायेन भेदाग्रहपरिपन्थिनं भेदसंस्कारमपेक्षते। अनाकलितकलधौतस्य शुक्तिशकले तत्समारोपानुपलम्भात्। संस्कारश्च प्रमितिमाकाङ्क्षति। अननुभूते संस्कारानुदयात्। न च भ्रान्तिरूपोऽनुभवस्तत्करणमिति भणितव्यम्। भ्रान्तेरभ्रान्तिपूर्वकत्वेन क्वचित्प्रमितेरवश्याभ्युपगमयितव्यत्वात्। विमतावात्मानात्मानौ भेदेन प्रमितावभेदायोग्यत्वात्, तमःप्रकाशवत्। न चाऽऽत्मानात्मनोरभेदायोग्यत्वलक्षणो हेतुरसिद्ध इति शङ्कनीयम्। विकल्पासहत्वात्। तथा हि—अनात्माऽऽत्मपरिशेषः स्यादात्माऽनात्मपरिशेषो वा। आद्ये मुक्तिदशा-

---

१ ख. °रुषः सं°। २ ख. °वृत्तिः फलं। ३ ख. °हावर्त°। ४ ख. °वण्स्थानक°। ५ ख. °न्तसेतमस्या°। ६ ख. °वादपदं। ७ °त्मनासि°। ८ ख. °पेक्ष्यते। ९ ख. °रूपानुभवस°। १० ख. भविष्यत्वात्। विम°।

यामिव परिदृश्यमानं जगदस्तमियात्। द्वितीये जगदान्ध्यं प्रसज्येत[1]। तमःप्रकाशवद्विरुद्धस्वभावत्वाद्दृग्दृश्ययोरात्मानात्मनोरभेदायोग्यत्वमवधेयम्। ततश्चार्थाध्यासानुपपत्तौ[2] तत्पूर्वकस्य ज्ञानाध्यासस्यासंभवेन ब्रह्मणो विचार्यत्वासंभवाद्विचारात्मिका चतुर्लक्षण[3]शारीरकमीमांसाऽनारम्भणीयेति पूर्वं पक्षे प्राप्ते सिद्धान्तोऽभिधीयते—अहंपदाधिगम्याद्न्यदात्मतत्त्वं नास्तीति न वक्तव्यम्। निरस्तसमस्तोपाधिकस्याऽऽत्मतत्त्वस्य श्रुत्यादिषु प्रसिद्धत्वात्। न च तेषामुपचरितार्थता। उपक्रमोपसंहारादिषड्[4]विधतात्पर्यलिङ्गवत्तया तत्त्वं बोधयतामुपचरितार्थत्वानुपपत्तेः। लिङ्गषट्कं च पूर्वाचार्यैर्दर्शितम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥ इति।

तत्र सदेव सोम्येदमग्र आसीदित्युपक्रमः। ऐतदात्म्यमिदं सर्वं[5] तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारः। तयोर्ब्रह्मविषयत्वेनैक्यरूप्यमेकं लिङ्गम्। असकृत्तत्त्वमसीत्युक्तिरभ्यासः। मानान्तरागम्यत्वमपूर्वत्वम्। एकविज्ञानेन सर्वविज्ञानं फलम्। सृष्टिस्थितिप्रलयप्रवेशनियमनानि[6] पञ्चार्थवादाः। मृदादिदृष्टान्ता उपपत्तयः। तस्मादेतैर्लिङ्गैर्वेदान्तानां नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मपरत्वं निश्चेतव्यम्। तदित्थमौपनिषदस्याऽऽत्मतत्त्वस्याहमनुभवेना[7]वभासमानत्वादध्यस्तात्मविषयत्वं सिद्धम्। कणभक्षाक्षचरणादिकक्षीकृतस्याऽऽत्मनो[8] भानाभावादहमनुभवस्याध्यस्तात्मविषयत्वमेषितव्यम्। न[9] तावदहमनुभवः सर्वगतत्वमात्मनोऽवगमयितुमीष्टे[10]। अहमिहास्मि सदने जानानं इति प्रादेशिकत्वग्रहणात्। न चेदं देहस्य प्रादेशिकत्वं[11] प्रतिभासत इति वेदितव्यम्। अहमित्युल्लेखायोगात्। यथा राज्ञः सर्वप्रयोजनविधातरि भृत्ये ममाऽऽत्मा भद्रसेन इत्युपचारस्तद्व[12]दात्मवचनस्याहशब्दस्य देह उपचार इति चेन्मैवं वोचः। उपचरितात्म[13]भावस्य देहादेः स्वसमानाकृतिशिलापुत्रकादिवज्ज्ञातृत्वायोगात्। न च ज्ञातृत्वमप्युपचरितम्। प्रयोक्तुः स्वप्रति[14]पत्तिप्रकाशके प्रयोगे प्रतिपत्तृत्वोपचारानुपपत्तेः। अथ देहधर्मः[15]

---

१ ख. °सजेत्। त°। २ ख. °पत्तेस्तत्पू°। ३ ख. °ते। आह। धि°। ४ ख. रादिष°। ५ ख. °ह्मविषयत्वे°। ६ ख. °नादिप°। ७ ख. °वेऽनव°। ८ ख. ग. °नोऽनवभासद°। ९ ख. न. तदाह°। १० ख. नयिति। ११ ख. °कत्वंप्रतिभासत। १२ क ग. °द्वदना°। १३ ख. °त्मभा°। १४ ख. °तिपत्तिप्र°। १५ ख. °धर्मप्रा°।

प्रादेशिकत्वमात्मन्युपचर्येत[1] तदा देहात्मनोर्भेदेन भवितव्यम् । प्रसिद्धभेदे माणवके सिंहशब्दवत्सांप्रतिकगौणत्वे तिरोहितभेदेन सार्षपादौ रसे तैलशब्दवन्निरूढगौणत्वे वा गौणमुख्ययोर्भेदाध्यवसायस्य नियतत्वात् । अथ मम शरीरमितिभेदभानसंभवाद्गौणत्वं मन्येथास्तद्युक्तम् । अहंशब्दार्थस्य देहादिभ्यो निष्कृष्य साधारणधर्मवत्त्वेन प्रतिभासमानत्वाभावात् । अपरथा लोकायतिकमतं नोदयमासादयेत् । मम शरीरमित्युक्तिस्तु राहोः शिर इतिवदौपचारिकी । मम शरीरमिति ब्रुवाणेनापि कस्त्वमिति पृष्टेन वक्षस्थलन्यस्तहस्तेन गृह्यग्राहिकयाऽयमहमिति प्रतिवचनस्य दीयमानत्वेन देहात्मप्रत्ययस्य सकलानुभवसिद्धत्वात् । तदुक्तम्—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ इति ।

तथा च व्यापकस्य भेदभानस्य निवृत्तेर्व्याप्यस्य गौणत्वस्य निवृत्तिरिति निरवद्यम् । नन्वभिज्ञया भेदसिद्धिर्मा[2] संभून्नाम । प्रत्यभिज्ञया तु सोऽहमित्येवंरूपया तत्सिद्धिः संभविष्यतीति चेन्न । विकल्पासहत्वात् । किमियं प्रत्यभिज्ञा पामराणां स्यात्परीक्षकाणां वा । नाऽऽद्यः । देहव्यतिरिक्तात्मैक्यमवगाहमानायाः प्रत्यभिज्ञाया अनुदयात् । प्रत्युत श्यामस्य लौहित्यवत्कारणविशेषादल्पस्यापि महापरिमाणत्वमविरुद्धमनुभवतां तद्देह[3] एव तस्याः संभवाच्च । न द्वितीयः । व्यवहारसमये पामरसाम्यानतिरेकात्[4] । परोक्षभ्रमस्य परोक्षज्ञानत्वानुपपत्तेश्च । यदुक्तं भगवता भाष्यकारेण—पश्वादिभिश्चाविशेषादिति । भामतीकारैरप्युक्तं शास्त्रचिन्तकाः खल्वेवं विचारयन्ति न प्रतिपत्तार इति । तथा चाऽऽत्मगोचरस्याध्यासात्मरूपत्वं सुस्थम् । न चाऽऽर्हतमतानुसारेणाहंप्रत्ययप्रामाण्यायाऽऽत्मनो[5] देहपरिणामत्वमङ्गीकरणीयमिति सांप्रतम् । मध्यमपरिमाणस्य[6] सावयवत्वेन देहादिवदनित्यत्वे कृतहानाकृताभ्यागमप्रसङ्गात् । अथैतद्दोषपरिजिहीर्षयाऽवयवसमुदाय आत्मेत्यभ्युपगम्येत । तदा वक्तव्यम् । किं प्रत्येकमवयवानां चैतन्यं संघातस्य वा । नाऽऽद्यः । बहूनां चेतानानामहमहमिकया प्रधानभावमनुभवतामैकमत्याभावेन समसमयं विरुद्धदिक्क्रियतया

---

१ ख. चर्यते । २ ख. चेन्न वि° । ३ ख. तदाह । ४ ख. °रेकाप° । ५ ख. °याऽऽत्म° ।
६ ख. °रिमाणत्व° ।

शरीरस्यापि विशरणनिष्क्रियत्वयोरन्यतरापातात्। द्वितीयेऽपि संघातापत्तिः किं शरीरोपाधिकी स्वाभाविकी याहच्छिकी वा। नाऽऽद्यः। एकस्मिन्नवयवे छिन्ने चिदात्मनोऽप्यवय[1]वश्छिन्न इत्यचेतनत्वापातात्। न द्वितीयः। अनेकेषामवयवानामन्योन्यसाहित्यनियमादर्शनात्। न तृतीयः। संश्लेषवद्विश्लेषस्यापि याहच्छिकत्वे[2]न सुखेनेव सतामकस्मादचेतनत्वप्रसङ्गात्। न चाणुप[3]रिमाणत्वमात्मनः शङ्कनीयम्। स्थूलोऽहं दीर्घोऽहमितिप्रत्ययानुपपत्तेः। न च विज्ञानात्मभाषिणां नैष दोषः। विशुद्धसावयवत्वाभावादिति गणनीयम्। यः सुषुप्तः सोऽहं जागर्मीति स्थिरगोचरस्याहमुल्लेखस्य क्षणभङ्गिविज्ञानगोचरत्वेऽतस्मिंस्तद्बुद्धिरूपमिथ्याध्यासस्य तदवस्था[4]नात्। तदनेन कृशोऽहं कृष्णोऽहमित्यादीनां प्रख्यानानां बुद्ध्या सरूपताख्यानेनौपचारिकत्वं प्रत्याख्यातम्। तद्यापकभेदभाना[5]संभवस्य प्रागेव प्रपञ्चितत्वात्। तथा च प्रयोगः—विमतं शास्त्रं[6] विषयप्रयोजनसहितमाविद्यकबन्धनिवर्तकत्वात्सुप्तोत्थितबोधवत्। यथा स्वप्नावस्थायां मायापरिकल्पितयोषादिकृतबन्धनिवर्तनस्य सुप्तोत्थित[7]बोधस्य मन्दिरमध्ये सुखेन शय्यायामवतिष्ठमानो दे[8]हो विषयस्तस्य सुप्तबोधेनानिश्चयात् स्वप्नमायाविजृम्भितानर्थनिवृत्तिः प्रयोजनमेवं मननादिजन्यपरोक्षज्ञानद्वारे[9]णाऽऽध्यासिककर्तृत्वभोक्तृत्वाद्यनर्थनिषेधकस्य शास्त्रस्य सच्चिदानन्दैकरसं[10] प्रत्यगात्मभूतं ब्रह्म विषयस्तस्याहमनुभवेनानिश्चयादध्यासानिवृत्तिः प्रयोजनम्। तथा चाफलत्वादिति हेतुरसिद्ध इति सिद्धम्। तदुक्तम्—

श्रुतिगम्यात्मतत्त्वं तु नाहंबुध्याऽवगम्यते।

अपि खे कामतो मोहा [11]नात्मन्यस्त(*विषयतामितीव[12])मसंदिग्धत्वादिति हेतुरप्यसिद्ध इति सिद्धम्। यद्यपि सर्वः प्राणी प्रत्यगात्मास्तित्वं प्रत्येति अहमस्मीति। न हि कश्चिदपि नाहमस्मीति विप्रतिपद्यते। प्रत्यगात्मैव ब्रह्म। तत्त्वमसीतिसामानाधिकरण्यात्। तस्मादात्मतत्त्वमसंदिग्धं सिद्धम्। तथाऽपि धर्मं प्रति विप्रतिपन्ना बहुविधा इतिन्यायेन विशेषप्रतिपत्तिरुपपद्यत एव। तथाहि-चैतन्यविशिष्टं देहमात्मेति लोकायता

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने-विपर्यये ॥ इति। अतोऽय-इति-ग्रन्थः स्यात्।

१ ख. °यवो भिन्न इतिचे°। २ ख. °त्वे सुखेनव°। ३ ख. °परमा°। ४ ख. °स्थातद°। ५ ख. °नानामध्यास°। ६ ख. °योगावि°। ७ ख. शास्त्रवि°। ८ ख. देहो न। ९ ख. °नव्यापारे°। १० ख. °स्वंना°। ११ ख. नान्यस्त°। १२ ख. °मिताव°।

मन्यन्ते। इन्द्रियाण्यात्मेत्यन्ये। अन्तःकरणमात्मेत्यपरे। क्षणभङ्गुरं संतन्यमानं विज्ञानमात्मेति बौद्धा बुध्यन्ते। देहपरिणाम[1] आत्मेति जैना जिनाः प्रतिजानते। कर्तृत्वादिविशिष्टः परमेश्वराद्भिन्नो जीवात्मेति नैयायिकादयो वर्णयन्ति। द्रव्यबोधस्वभावमात्मेत्याचार्याः[2] परिचक्षते। भोक्तैव केवलं न कर्तेति सांख्याः संगिरन्ते। चिद्रूपः कर्तृत्वादिरहितः परस्मादभिन्नः प्रत्यगात्मेत्यौपनिषदा भाषन्ते। एवं प्रसिद्धे धर्मिणि विशेषतो विप्रतिपत्तौ तद्विशेषसंशयो युज्यते। तथा च संदेहसंभवाज्जिज्ञास्यत्वं ब्रह्मणः सिद्धम्। तदित्थं ब्रह्मणो विचार्यत्वसंभवेन[3] तद्विचारात्मकं ब्रह्ममीमांसाशास्त्रमारम्भणीयमिति युक्तम्। जन्माद्यस्य यत इत्यादिसर्वस्य शास्त्रस्यैतद्विचारापेक्षत्वाच्छास्त्रप्रथमाध्यायसंमतमिदमधिकरणम्। नन्वित्थंभूते ब्रह्मणि किं प्रमाणं प्रत्यक्षमनुमानमागमो वा। न[4] कदाचित्तत्र प्रत्यक्षं क्रमते। अतीन्द्रियत्वात्। नाप्यनुमानम्। व्याप्तस्य लिङ्गस्याभावात्। नाप्यागमः। यतो वाचो निवर्तन्त इति श्रुत्यैवाऽऽगमगम्यत्वनिषेधात्। उपमानादिकमशक्यशङ्कम्। नियतविषयत्वात्। तस्माद्ब्रह्मणि प्रमाणं न संभवतीति चेन्मैवं वोचः। प्रत्यक्षाद्यसंभवेऽप्यागमस्य[5] सत्त्वात्। यतो वाचो निवर्तन्त इति वाग्गोचरत्वनिषेधात्कथमेतदिति चेच्छ्रुतिरेव निषेधति, वेदान्तवेद्यत्वं ब्रह्मणः श्रुतिरेव विधत्ते,। न हि वेदप्रतिपादितेऽर्थेऽनुपपन्ने वैदिकानां बुद्धिः[6] खिद्यते, अपि तु तदुपपादनमार्गमेव विचारयति[7]। तस्मादुभयमपि प्रतिपादनीयम्[8]। विषयत्वनिषेधकानि वाक्यानि वाक्यजन्यवृत्तिव्यक्तस्फुरणलक्षणफलासंभवविवक्षया प्रवृत्तानि। विषयत्वबोधकानि तु वृत्तिजन्यावरणभङ्गलक्षणफलसंभवविवक्षया। तदुक्तं भगवद्भिः—

"अनाधेयफलत्वेन श्रुतेर्ब्रह्म न गोचरः।
प्रमेयं प्रमितौ तु स्यादात्माकारसमर्पणात्" ॥ इति।
"न प्रकाश्यं प्रमाणेन प्रकाशो ब्रह्मणः स्वयम्।
तज्जन्यावृतिभङ्गत्वात्प्रमेयमिति गीयते" ॥ इति च।

ननु स्यादेष मनोरथो यदि सिद्धेऽर्थे वेदस्य प्रामाण्यं सिध्येत्। संगतिग्रहणायत्तत्वात्प्रामाण्यनिश्चयस्य। संगतिग्रहणस्य च वृद्धव्यव-

---

१ ख. °रिमाण आ°। २ ख. °चार्य प°। ३ ख. °र्यत्वेन सं°। ४ ख. न कदाचित्तत्रप्रत्यक्षक्रमले अ°। ५ ख. °पन्नवै°। ६ ख. बुद्धिर्भिद्य°। ७ ख. °रयितुमस्मा°। ८ ख. °यवि°।

हारायत्तत्वात् । वृद्धव्यवहारस्य च लोके कार्यैकनियतत्वात् । न ह्यस्ति संभवः शब्दानां कार्येऽर्थे संगतिग्रहः । सिद्धार्थाभिधायकत्वं[1] तत्र वा[2] प्रामाण्यमिति । न हि तुरङ्गत्वे[3] गृहीतसंगतिकं तुरङ्गपदं गोत्वमाचष्टे तत्र वा प्रामाण्यं भजते । तस्मात्कार्यगृहीतसंगतिकानां शब्दानां कार्य एव प्रामाण्यम् । ननु[4] मुखविकासादिलिङ्गाद्धर्षहेतुं प्रसिद्धार्थमनुमाय यत्र शब्दस्य संगतिग्रहो यथा पुत्रस्ते जात इत्यादिषु । तत्रावश्यं कार्यमन्तरेणैव शब्दस्य सिद्धेऽर्थे प्रामाण्यमाश्रीयत इति चेन्न । पुत्रजन्मवदेव प्रियासुखप्रसवादेरनेकस्य हर्षहेतोरुपस्थीयमानत्वेन परिशेषावधारणानुपपत्तेः । पुत्रस्ते जात इत्यादिषु सिद्धार्थपरेषु प्रयोगेषु द्वारं द्वारमित्यादिवत्कार्याध्याहारेण प्रयोगोपपत्तेश्च । शास्त्रत्वप्रसिध्द्या च न वेदान्तानां सिद्धार्थपरत्वम् । प्रवृत्तिनिवृत्तिपराणामेव वाक्यानां शास्त्रत्वप्रसिद्धेः । तदुक्तं भट्टाचार्यैः–

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते" ॥ इति ।

न चैतेषां स्वरूपपरत्वे प्रयोजनमस्ति । श्रुतवेदान्तार्थस्यापि पुंसः सांसारिकधर्माणामनिवृत्तेः । तस्माद्वेदान्तानामप्यात्मा ज्ञातव्य इति समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरतैवाऽऽश्रयणीयेति सिद्धम् । ततश्च केवलसिद्धरूपे ब्रह्मणि वेदान्तानां प्रामाण्यं न सिध्यतीति चेत् । अत्र प्रतिविधीयते–न तावत्सिद्धे व्युत्पत्त्यसिद्धिः । प्रागुन्नीतया नीत्या पुत्रस्ते जात इति वाक्यात्सिद्धपरादपि व्युत्पत्तिसिद्धेः । न च परिशेषावधारणानुपपत्तिः । प्रियासुखप्रसवादेरपि संभवादिति भणितव्यम् । पुत्रपादाङ्कितपटप्रदर्शनवत्प्रियासुखप्रसवादिसूचकाभावात् । पुत्रजन्मैव तत्सूचकमिति चेत्प्रथमप्रतीतपुत्रजन्मपरित्यागे कारणाभावात्पुत्रजननस्यैवाधिकानन्दहेतुत्वाच्च ।

पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः ।

इति विद्यमानत्वात् । तथा चाँचकथञ्चित्सुखाचार्यः–

दृष्टचैत्रसुखोत्पत्तेस्तत्पदाङ्कितवार्ससा ।
वार्ताहारेण वा तस्य परिशेषविनिश्चितेः ॥ इति ।

मुख्यार्थविषयतया सिद्धेऽपि प्रयोगसिद्धावध्याहारानुपपत्तेः । यदुक्तं शास्त्रत्वप्रसिध्द्या च न स्वरूपपरत्वमिति । तदप्ययुक्तम् । हितशासनादपि

---

१ ख. धायित्वं । २ ख. वा माप्रा° । ३ ख. रगत्वे । ४ ख. नु यत्रमु° । ५ ख. °यतकु° । ६ ख. °नसत्वे° । ७ ख. चावक° । ८ ख. °ससम् । वा° । ९ ख. ग. °क्तं प्रवृत्तिपराणामेव शास्त्रत्वमिति तन्न हि° ।

शास्त्रत्वोपपत्तेः । न च प्रयोजनाभावः । श्रुतमतवेदान्तजन्याद्वितीयात्मविज्ञानाभ्यासेन विद्योदये संसारनिदानाविद्यानिवृत्त्युपलक्षितब्रह्मात्मतालक्षणपरमपुरुषार्थसिद्धेः । नचात्र विधिः संभवति । विकल्पासहत्वात् । तथा हि—किं शाब्दज्ञानं विधेयं किं वा भावनात्मकमाहोस्वित्साक्षात्काररूपम् । नाऽऽद्यः । विदितपदार्थसंगतिकस्या[1]धीतशब्दन्यायतत्त्वस्यान्तरेणापि विधिं शब्दादेवोपपत्तेः । नापि द्वितीयः । भावनाया ज्ञानप्रकर्षहेतुभावस्यान्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वादप्राप्तप्रापकस्यैव विधित्वाङ्गीकारात् । तृतीये साक्षात्कारः किं ब्रह्मस्वरूपः किं वाऽन्तःकरणपरिणामभेदः । नाऽऽद्यः । तस्य नित्यत्वेनाविधेयत्वात् । नापि द्वितीयः । आनन्दसाक्षात्काररूपतया फलत्वेनाविधेयत्वात् । तस्माज्ज्ञातव्य इत्यादीनामविधायकत्वादर्हे कृत्यतृचश्चेति कृत्यप्रत्ययानामर्हार्थे विधानादर्हार्थ[2]तैव व्याख्येया । उपक्रमोपसंहारादिषड्विधतात्पर्योपेतत्वान्नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मपरत्वमास्थेयम् । तथा च निष्प्रदेशे परमाणौ प्रदेशवृत्तित्वेनाभिमतस्य संयोगस्य दुरुपपादनतया तन्निबन्धनस्य द्व्यणुकस्यासिद्धौ द्व्यणुकादि[3]क्रमेणाऽऽरम्भवादासंभवादचेतनायाः प्रकृतेर्महदादिरूपेण परिणामवादासंभवाच्च ख्यातिबाधान्यथानुपपत्त्याऽनिर्वचनीयः प्रपञ्चश्चिद्विवर्त इति सिद्धम् । स्वरूपापरित्यागेन रूपान्तरापत्तिर्विव[4]र्त इति सत्यमिथ्याख्यावभासस्तदत्यन्ताभाव इति तदवभासोऽध्यास इति पर्यायः । स चाध्यासो द्विविधः—अर्थाध्यासो ज्ञानाध्यासश्चेति । तदुक्तम्—

> प्रमाणदोषसंस्कारजन्मान्यस्य परात्मता ।
> तद्धीश्चाध्यास इति हि द्वयमिष्टं मनीषिभिः ॥ इति ।

पुनरपि द्विविधोऽध्यासः । निरुपाधिकसोपाधिकभेदात् । तदप्युक्तम्—

> दोषेण कर्मणा वाऽपि क्षोभि[5]ताज्ञानसंभवः ।
> तत्त्वविद्याविरोधी च भ्रमोऽयं निरुपाधिकः ॥
> उपाधिसंनिधिप्राप्तक्षोभाविद्याविजृम्भितम् ।
> उपा[6]ध्यपगमापोह्यमाहुः सोपाधिकं भ्रमम् ॥ इति ।

---

१ ख. °स्याधिगतशाब्द° । २ ख. °र्थतयैव । ३ ख. °दिप्रक्र° । ४ ख. °वर्तः स° । ५ क. °भितज्ञा° । ६ ख. °पाध्युप° ।

तत्र स्वरूपेण कल्पिताहमाद्यध्यासो निरुपाधिकः। तदप्युक्तम्—

नीलमेव विधत्येषा भ्रान्त्या ब्रह्मणि संसृतिः ।
घटव्योमेव भोक्ताऽयं भ्रान्तो भेदेन न स्वतः ॥ इति ।

अत एव भाष्यकारःशुक्तिका रजतवद्वभासत एकश्चन्द्रः सद्वितीयवदिति निदर्शनद्वयमुदाजहार। शिष्टं शास्त्र एव स्पष्टमिति विस्तरभियोपरम्यते । एवं च दृग्दृश्यौ द्वावेव पदार्थाविति वेदान्तिनां सिद्धान्त इति सर्वमवदातम् । अत्र प्रभाकरः—शुक्तिका रजतवद्वभासत इति दृष्टान्तो नेष्टः । रजतप्रत्ययस्य शुक्तिकालम्बनत्वानुपपत्तेः । तथाहि—इदं रजतमितिप्रतीतौ शुक्तेरालम्बनत्वं पुरोदेशसत्तामात्रेणावलम्ब्यते कारणत्वेन भासमानत्वेन वा । नाऽऽद्यः। पुरोवर्तिनां लोष्टादीनामप्यालम्बनत्वप्रसङ्गात् । अथ कलधौत[3]बोधिकरणसंस्कारोद्बोधकारणत्वेन तद्द्वारा रजतज्ञानकारणत्वादालम्बनत्वं मन्यसे । तदपि न संगच्छते । चक्षुरादीनामपि कारणत्वेन विषयत्वापातात् । अथ भासमानतया विषयत्वमिष्यते । तदप्याश्लिष्टम् । रजतनिर्भासस्य शुक्तिकालम्बनत्वानुपपत्तेः। यस्मिन्विज्ञाने यदवभासते तत्तदालम्बनम् । अत्र च कलधौतानुभवः शुक्तिकालम्बनत्वकल्पनायां विरुध्यते । तथा चाचकथन्न्यायवीथ्यां शारिकानाथः—

अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव नान्यद्धि वेद्यावेद्यत्वलक्षणम् ॥
इदं रजतमित्यत्र रजतं त्ववभासते ।
तदेव तेन वेद्यं स्यान्न तु शुक्तिरवेदनात् ॥
तेनान्यस्यान्यथा भासः प्रतीत्यैव पराहतः ।
अन्यस्मिन्भासमाने हि न परं भासते यतः ॥ इति ।

किंच मिथ्याज्ञानोत्पत्तौ सामग्री न समस्ति । किं केवलानीन्द्रियादीनि कारणानि दोषदूषितानि वा। नाऽऽद्यः, तेषां समीचीनज्ञानजननसामर्थ्योपलम्भात् । अन्यथा समीचीनं रजतज्ञानं न कदाचिदुदयमासादयेत् । न द्वितीयः । दोषाणामौत्सर्गिककार्यप्रसवशक्तिप्रतिबन्धमात्रप्रभावत्वात्। न हि दुष्टं कुटजबीजं वटाङ्कुरं जनयितुमीष्टे। न वा तैलकलु-

---

१ ख. °रः प्राह—शु° । २ ख वा न प्रथमः । पु° । ३ ख. °तबोधिकरणं सं° । ४ ख. °द्वाररजतज्ञा° । ५ ख. °नाऽयं नावि° । ६ ख. °थाचाचकथयन्न्यायाविध्यांशालिकानाथः । अ° । ७ ख. वेद्यथाविवनान्यद्वे° । ८ ख. °तदत्र° ।

षितं शालिबीजमशाल्यङ्कुरजननायालं किं तु स्वकार्यं न करोति । ननु दावदहनदग्धस्य वेत्रबीजस्य कदलीकाण्डजनकत्वं दृष्टमिति चेत् । तन्न स्थाने । दग्धस्यावेत्रबीजत्वेन दोषाणां विपरीतकार्यकारित्वं प्रत्यनुदाहरणात् । नच भस्मकदोषदूषितस्य कौक्षेयकस्या[1]ऽऽशुशुक्षणेर्बह्वन्नपचनसामर्थ्यं दृष्टमित्येष्टव्यम् । अशितपीताद्याहारपरिणतौ जाठरस्य जातवेदसः शक्तत्वात् । तदुक्तम्—

अन्यथार्थस्य बोधस्य नोत्पत्तावस्ति कारणम् ।
दोषाश्चेन्न हि दोषाणां कार्यशक्तिविघातता ॥ इति ।
भस्मकादिषु कार्यस्य विघातादेव दोषता ।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्तिनः ॥ इति ।

अपि च असत्यप्यर्थे ज्ञानप्रादुर्भावाभ्युपगमे समीचीनस्थलेऽपि ज्ञानानां स्वगोचरव्यभिचारशङ्काङ्कुरसंभवेन निरङ्कुशो व्यवहारो लुप्यते । [2]तदाह—

यदि चार्थं परित्यज्य काचिद्बुद्धिः प्रकाशते ।
व्यभिचारवति स्वार्थे कथं विश्वासकारणम् ॥ इति ।

ननु रजतगोचरैकविशिष्टज्ञानानङ्गीकारे विशिष्टव्यवहारो न सिध्येत् । अतस्तत्सिद्ध्येऽपि विपर्ययोऽङ्गीकार्य इति चेन्न । इदं रजतमिति ग्रहणस्मरणाभिधस्य बोधद्वयस्य व्यवहारकारणत्वाङ्गीकारात् । यद्येवमिदं शुक्तिकाशकलं तद्रजतमित्यतोऽपि विशिष्टव्यवहारः स्यादिति । तन्न । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणस्य दोषदूषितचक्षुर्जन्यत्वेनानाकलितशुक्तित्वादिविशेषितस्य सामान्यमात्रग्रहणरूपत्वाद्रजतमिति ज्ञानस्य संनिहितविषयस्य संप्रयोगालिङ्गस्य प्रसूततया सदृशावबोधितसं[3]स्कारमात्रप्रभवत्वेन परिशेषप्राप्तस्मृतिभावस्य दोषहेतुकतया गृहीततत्त्वंशिप्रमोषाद्ग्रहणमात्रत्वोपपत्तेः तदप्युक्तम्—

नन्वत्र रजताभासः कथमेष घटिष्यते ।
उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् ॥
शुक्तिकाया विशेषा ये रजताद्भेदहेतवः ।
ते न ज्ञाता अभिभवाज्ज्ञातसामान्यरूपता ।
अनन्तरं च रजतस्मृतिर्जाता तथाऽपि च ॥

---

१ ख. °रिहरणतौ । २ ख. तथाऽऽह । ३ ख. °दंश प्र° ।

मनोदोषात्तदित्यंशपरामर्शविवर्जितम् ।
रजतं विषयीकृत्य न तु शुक्तेर्विवेचितम् ॥
स्मृत्याऽतो रजताभास उपपन्नो भविष्यति ।
न ह्यसंनिहितं तावत्प्रत्यक्षं रजतं भवेत् ॥
लिङ्गाद्यभावाच्चान्यस्य प्रमाणस्य न गोचरः ।
परिशेषात्स्मृतिरिति निश्चयो जायते पुनः ॥ इति ।

ननु किमिदमेकैकं व्यवहारकारणमुत संभूय । न प्रथमः । देशभेदेन प्रवृत्तिप्रसङ्गात् । न चरमः प्रवृत्तिज्ञानायौगपद्यादित्यादिना ज्ञानयौगपद्यनिषेधादतो ज्ञानद्वयं हेतुरित्ययुक्तं वच इति चेन्मैवं वोचः । अविनश्यतोः सहावस्थाननिषेधेऽपि विनश्यदविनश्यतोः सहावस्थानस्यानिषिद्धत्वेन निरन्तरोत्पन्नयोस्तदुपपत्तेः । ननु रजतज्ञानाद्रजतार्थी रजते प्रवर्ततां नाम । पौरस्त्ये वस्तुनि कथं प्रवृत्तिः स्यादिति चेन्न । स्वरूपतो विषयतश्चागृहीतभेदयोर्ग्रहणस्मरणयोः संनिहितरजतगोचरज्ञानसारूप्येण वस्तुतः परस्परं विभिन्नयोरप्यभेदोचितसामानाधिकरण्यव्यपदेशहेतुत्वोपपत्तेः । ग्रहणस्मरणयोः संनिहितरजतज्ञानसारूप्य कथम् । यथा चैतत्तथा निशम्यताम् । संनिहितरजतगोचरं हि विज्ञानमिदमंशरजतांशयोरसंसर्गं नावगाहते । तयोः संसृष्टत्वेनासंसर्गस्यैवाभावात् । नापि स्वगतं भेदम् । एकज्ञानत्वात् । एवं ग्रहणस्मरणे अपि दोषवशाद्भिद्यमानमपीदमंशरजतांशयोरसंसर्गं भेदं नावगाहत इति भेदाग्रहणमेव सारूप्यम् । तदुक्तं गुरुमतानुसारिभिः-

ग्रहणस्मरणे चेमे विवेकानवभासिनि ।
सम्यग्रजतबोधाच्च भिन्ने यद्यपि तत्त्वतः ॥
तथाऽपि भिन्नेनाऽऽभाते भेदग्रहसमत्वतः ।
सम्यग्रजतबोधस्तु समक्षैकार्थगोचरः ॥
ततो भिन्ने अबुद्ध्वा च ग्रहणस्मरणे इमे ।
अपरोक्षावभासेन समानार्थग्रहेण च ॥
अवैलक्षण्यसंवित्तिरिति तावत्समर्थिता ।
व्यवहारोऽपि तत्तुल्यस्तत एव प्रवर्तते ॥ इति ।

एवं गृहीतविवेकमापन्नसंनिहितरूप्यज्ञानसारूप्यं ग्रहणस्मरणद्वयमयथाव्यवहारहेतुरिति सिद्धम् । यद्येवमयथाव्यवहारो ग्रहणस्मरणजन्य-

१ ख. °त्य न तु । २ ख. °धेवि° । ३ ख. °नार्थं ग्र° ।

